श्रीमद्रघुनाथसूरिविरचिता

# माणिक्यमञ्जरी

भावदीपिकासहिता



Scanned with CamScanner

Scanned with CamScanner

Scanned with CamScanner

Scanned with CamScanner

Scanned with CamScanner

Scanned with CamScanner

Scanned with CamScanner

Scanned with CamScanner

Scanned with CamScanner

Scanned with CamScanner

Scanned with CamScanner





Scanned with CamScanner

Scanned with CamScanner

ॐ

# विज्ञापनम्

श्रीमन्महाराजसंस्कृतमहापाठशालायां महिषासुरपुरमध्यमलङ्कुर्वाणायां श्रीतत्त्वसुधादि ग्रन्थकर्तृभ्यः श्रीशवरदाचार्येभ्योऽपि पूर्वतनैः श्रीवेङ्कटनाथन्-श्रीगणेशभट्टप्रभृतिमनीषिप्रवराणां पूर्वमीमांसाया आचार्यैश्चतुर्वेद्युपाह्वैः पूर्वोत्तरमीमांसादिपारावारपारीणैः भूतपूर्वपूर्वमीमांसाप्राध्यापकैः श्रीरामचन्द्राचार्यैः श्रीविष्णुतत्त्वदीपिकाख्यः संस्कृतग्रन्थस्तञ्जापुरसरस्वतीमहाल्कोशागारस्थ मातृकासाहाय्येन प्राकाशि । तदिदं विज्ञाय मया वेदान्तविभागस्य प्राध्यापकचराणां सम्प्रति श्रीशृङ्गगिरिमध्यासीनानां वेदान्तकेसरिणां श्रीनारायणभट्टमहाभागानां सविधे न्यवेदि । चतुर्वेदिभिः परिष्कृतमिति पुरस्कर्तव्यमपि तत् कृत्स्नतया न स्वीकर्तव्यमिति तैरभ्यधायि ।

अनेन स्वस्वमताभिमानेन स्वकीयग्रन्थप्रकाशनं परमतनिराकरणं वा सत्वगुणसम्पन्नाना मपि विदुषां न दोषावहमिति, कर्तव्यमेवेति च विज्ञायते । जोघुष्यते च शाङ्कराशाङ्करभाष्य विवेकादावयमेवाभिप्रायः । तदनुसारेण श्रीशङ्करमतानुयायिना मया प्राचीनानां श्रीमदप्पय्यदीक्षित-श्रीभट्टोजिदीक्षितादिसुप्रसिद्धविद्वद्वरेण्यसञ्चरिते वर्त्मनि लघुसञ्चारश्चेत् क्रियते, तन्मार्गमवलम्ब्य पूर्णप्रज्ञमतं यदि परिशील्यते, तर्हि न दोषाय भवेत्। गुरूक्तमपि दुरुक्तं प्राचीनवार्तिककृद्भिर्विमृश्यते, प्राचीनसूत्राद्युक्तमपि नवीनैरालोच्यते, मूलोक्तमपि व्याख्यायामन्यथाक्रियत इति चिन्तयद्भि मर्षणीयमेतत् ।

सन्त्येव माध्वानां मध्ये ममादरभाजो विद्यागुरवः, संस्मरणीयाः सुहृदः, प्रीतिपात्रच्छात्राः। अनेन माध्वारुन्तुदग्रन्थप्रकाशनकर्मणा नो खलु विद्यागुरूणां समादरः, सुहृदां स्नेहः, छात्राणां वानुरागो हीयते, प्रत्युत स्फुटभाषितयात्मीयत्वादिकं सर्वं वर्धते । अत एव स्वमताभिनिवेशं विज्ञायापि सम्बन्धं संरक्षन्तः सन्ति सन्तो नः प्रदेशे । शिवपारम्यादिविषये कलहं कृत्वा मोदकं भुञ्जते, भुक्त्वा च पुनः कलहं कुर्वते । अस्ति च श्रीवादिराजमठो माध्वानां, यं परितः सन्ति केवलं स्मार्ताः । अस्ति च माध्वमठाष्टकमध्ये चन्द्रमौळीश्वरमन्दिरम्, यदुत्सवादौ सर्वप्रथमं सोल्लासं सन्दृश्यते सर्वैः । नानेन हेतुना माध्वानां स्मार्तानां च मतीयं सौहार्दं शक्यशङ्कम् । प्रायेण माध्वाः स्वमताभिनिवेशेन स्मार्तान् द्विषन्ति, द्वेषेण च भाषणादावधिक्षिपन्ति ।

अत्रोदाहरणम् - कदाचिदाचार्युपाह्वः कश्चिन्माध्वसुहृत् मणिमञ्जरीं वाचयितुं मामसूसुचत्। संस्कृतं पठित्वा मणिमञ्जरी यदि न पठिता, तर्हि किमु वक्तव्यमिति चातूतुदत्। तत्र भगवत्पादानाम्



Scanned with CamScanner

आचार्यश्रीशङ्कराणां सविमर्शः परिचयोऽस्तीति सोऽचीकथत् । संस्कृतानभिज्ञस्य तस्य स्वमतरागं परमतद्वेषं च विज्ञायापि मया तूष्णीम्भावोऽवललम्बे, न बुद्धिभेदं जनयेद् अज्ञानामिति स्मारं स्मारं श्रीभगवद्वचनम् । तथापि व्याकुले मामके मानसे भगवत्पादानां निन्दापरिमार्जनाय यदेव लघ्वी चिन्ता प्रादुरभूत्, तदैव सर्वदा संस्मरणीयानां श्रीगुरुचरणानामकम्पयाऽनुकम्पया माणिक्यमञ्जरी कथञ्चित् सप्ताहाभ्यन्तरे प्राप्ता । तदिदं काकतालीयं मम मानसस्य वैक्लव्यमपसार्य माममन्दानन्दतुन्दिलमकरोत् । सोत्साहं माणिक्यमञ्जरी मयाऽवालोकि, न पुनर्मणिमञ्जरी । सम्प्रति माध्वसुहृदां सकाशे वक्तुं प्रभवामि - संस्कृतं पठित्वा माणिक्यमञ्जरी यदि न ज्ञायते, तर्हि किं तेन संस्कृताध्ययनेन, अत्र पूर्णप्रज्ञानां पूर्णः परिचयो लभ्यत इति ।

अस्य दैवादाविष्कृतस्य सव्याख्यस्य माणिक्यमञ्जर्याख्यकाव्यस्य सारांशः सुहृदां सुखावबोधाय सङ्गृह्यते -

**मङ्गलाचरणम्**

ग्रन्थोपक्रमे तत्रभवान् रघुनाथनामा विद्वान् माणिक्यमञ्जर्या अनन्तरायपरिसमाप्तये शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकं महाभाष्यकारपतञ्जलिशासनानुगृहीतमाचार्यदण्ड्यनुमोदितं च भगवत्प्रार्थनारूपं मङ्गलमाचाराविच्छेदपालनायाचरन् शिष्यशिक्षार्थं प्रबन्धमुखे तदुपनिबध्नाति - अत्र शिवमस्तकविद्योतमानज्ञानचन्द्रकलामुत्प्रेक्षते । हरशिरसि विभासमाना मन्दाकिनी शिवललाटलोचनवह्निना जायमानात् सन्तापादिव शुष्कतां गता । गङ्गाशुष्की भवनेन तान्तशिवजटालतापोषणार्थं कुन्त्याः पुत्रेणार्जुनेन, गाण्डीवेन धनुषा, भेदने प्रहरणे वा कृते यो गर्तो जातस्तस्य व्याजात् जलाशयं कृत्वा, तां जटालतां जलाशयोदकेन आर्द्रीकर्तुम्, ओषधीशत्वेन प्रसिद्धश्चन्द्रमा भगवतो महादेवस्य मस्तके निक्षिप्त इवास्ति । प्रज्ञानमितीन्दोः कलयालङ्कृतं शिवस्य शिरः । स सदाशिवोऽस्मभ्यं श्रेयांसि दद्यात् इति । प्रज्ञानेन्दु... इति विशेषणं शिवगतज्ञानप्रदत्वकथनाभिप्रायकत्वेन साभिप्रायमिति परिकरालङ्कारः।

शिवस्य निरतिशयज्ञानप्रदत्वं चन्द्रमौलितैवाभिव्यञ्जयति । तथा हि - यथा पाठयितारः पिपठिषूणामभिज्ञानाय पाठशालाद्यूर्ध्वदेशे पाठध्वजादीन् निखातयन्ति, एवमयं शिवोऽपि स्वयं ज्ञानप्रद इति प्रत्यायनेन लोकान् अनुजिघृक्षुर्ज्ञानमयीं चन्द्रकलां शिरसि धारयति । शिवस्य ज्ञानप्रदत्वं स्मृतावभिहितम् । पतञ्जलिरपि योगशास्त्रे सूत्रयामास । शिवधृतचन्द्रस्य ज्ञानस्वरूपत्वं शिवपुराणेऽभिहितम् । इत्थं च ज्ञानप्रदं शिवं ज्ञानरूपं श्रेयोऽर्थयामासेत्याकूतम् । श्रेयांसीति



Scanned with CamScanner

बहुवचनं तु विषयभेदगतज्ञानभेदाभिप्रायेणेति वेद्यम् । ततश्च सर्वविषयकं ज्ञानं दद्यादिति फलितोऽर्थः।

कविः पद्येऽस्मिन् सकलजगदुन्मूलनप्रवृत्तगङ्गानदीनिरोधेन दुष्टनिबर्हणत्वं, सांसारिकदुःखमनुभवतो जगतः किञ्चित्कालं महासुषुप्त्यापादनेन विश्रान्तिदानाय कृतफाललोचनग्रहणेन परमदयालुतां, मुनिजनलक्षणजटाधरत्वेन सत्त्वसम्पत्तिं, पार्थप्रहारवत्त्वेन भक्तापराधसोढृत्वं, भक्तजनशाश्वतकीर्तिसम्पादनदीक्षितत्वं चाभिप्रेत्य गङ्गाधरत्व-भाललोचनत्व -जटाधरत्व-पार्थप्रहारित्वान्यभिव्यञ्जयति ।

**व्याख्याया मङ्गलाचरणम्**

अत्र पुरभित् परमेश्वरः रक्षणार्थं प्रार्थ्यते । त्रिपुरसंहारसमये सूर्यचन्द्रौ चक्रे, वेदा अश्वाः, परमेष्ठी सारथिः, भूमण्डलं रथः, सुमेरुः धनुः, वासुकिः गुणः, नारायणो बाणः इत्युक्तं पुराणेषु । अन्यत्राप्युक्तम् -

नालीकासनमीश्वरः शिखरिणां तत्कन्धरोत्थायिनो
गन्धर्वाः पुनरेतदध्वचरिते चक्रे तदुद्धारकः ।
पत्री तत्प्रभुवैरिणां परिवृढो जीवा च यस्याभवत्
तस्यान्तेवसतां रिपुक्षयविधौ देवाय तस्मै नमः ।। इति ।(द्र. न्यायरक्षामणिः १.१.६)

अत्र व्याख्यायां भगवतः शिवस्य विषये परेषां केषाञ्चन सन्देहानां निराकरणं क्रियते -

(१) शिवस्य स्मशानवासितयामङ्गलत्वान्न श्रेयःप्रदत्वम् इति परेषां शङ्का । महाप्रलयस्यैव स्मशानत्वेन परैरपि परमार्थतयाभ्युपगते परवस्तुनि तदुररीकर्तव्यमिति समाधानम्।

(२) शिवस्य क्षुद्रश्मशानवासित्वेनापावनत्वमिति शङ्का । शिवस्य स्मशानवासः परमदयालुताबोधक इति लिङ्गपुराणानुसारेण समाधिः ।

(३) पिशाचाद्यपवित्रप्राणिपरिवेष्टितत्वेन शिवस्यापवित्रत्वम् इति शङ्का । शिवानुचराणां भूतादीनां शिवांशत्वमिति कूर्मपुराणानुसारेण समाधानम् ।

(४) कपालमालाधारणेनेश्वरस्यापवित्रतेत्याक्षेपेऽतीतानन्तकल्पीयब्रह्म कपालमालाधारणं सदाशिवस्य परमोत्तमताख्यापकमिति प्रतिवचनम् ।

अत्र महानाटके बोधायनेनोक्तमुदाहृतम् -

पादे विष्णुविलोचनं कटितटे नित्यं नृसिंहाजिनं



Scanned with CamScanner

हारे कूर्मशिरः कराम्बुजतले कङ्कालनामायुधम् ।
शूलाग्रे शवकेशवो हरिशिरोमाला च कण्ठे तथा
पात्रं ब्रह्मशिरः कपालमभवद् व्यक्तं पुराणोदितम् ।। इति ।

(५) शिवस्य ब्रह्मादिनिग्रहकर्तृत्वेन क्रूरतेति पूर्वपक्षे दुष्टानां नियन्तुरयं धर्म इति प्रतिक्षेपः ।

(६) शिवस्य ब्रह्मपुत्रतेति परेषां वचनं परस्परस्माद्ब्रह्मादेः प्रादुर्भावादकिञ्चित्करम् ।

(७) सर्वलोकनियन्तुः शिवस्य रोदनकर्तृत्वकथनम् न न्याय्यम् ।

(८) बाणासुरयुद्धादौ शिवस्यासामर्थ्यम् आविष्कुर्वन्तः, विष्णोश्च सामर्थ्यं प्रदर्शयन्तः पुराणदि सम्यक् परिशीलयन्तु ।

अत्र सङ्ग्रहः -

स्वापत्याङ्गविनाशनेऽपि च शिरश्छेदे स्वसूनोर्विधेः
स्वाङ्गस्य त्रिशिखेन भेदनविधौ रुद्रेण दैत्यद्विषः ।
शक्तिः कुत्र गताद्य बाणसमरे प्राप्ता तथा जीरिण-
श्चापस्यास्य हि खण्डने रघुभुवो जाता जडस्त्वं वद ।। इति ।

(९) गङ्गाधरत्वं शिवस्य न्यूनतापादकम् इति वदन्तो गङ्गाया विष्णुपादाद् जातायाः, शिवशिरसि धृताया हैमवत्याश्च भेदाज्ञानेन भ्रान्ताः । अत्रायं व्याख्यातुः सङ्ग्रहः -

भूलोके यदि च त्रिविक्रमपदाङ्गुष्ठोद्भवा निम्नगा
वर्तेत स्वपितॄन् भगीरथमहीपालस्तयैवोद्धरेत् ।
तद्यत्नादनुमीयते भुवि न सेत्युर्वीशसम्पादितां
गङ्गां हैमवतीं दधार शिरसा शम्भुर्न विष्ण्वङ्घ्रिजाम् ।। १ ।।
गङ्गा विष्णुपदी शिवेन विधृतेत्युक्तिर्महाभारत-
श्रीकूर्मोक्तिविबोध्यमानगगनस्रोतस्विनीशम्बरम् ।
राजानीतमहानदीजलगतं तस्याः परं धारणाद्
योज्या विष्णुपदी निपातसमये धृत्यप्रसक्तेर्विभोः ।। २ ।। इति ।।

(१०) नयनाग्नेः कल्पान्ते जगत्संहरणकरणत्वेन तमोलिङ्गत्वात् शिवस्य तामसत्वम् इति शङ्का वैद्यकृतशस्त्रक्रियोदाहरणेन निराक्रियते ।



Scanned with CamScanner

(११) परशिवस्याप्रसिद्धत्वम् श्रुतिस्मृतिपुराणेभ्यो व्युदस्यते । ततो नारायणस्य शिवांशत्वं, भेदवादिनामनर्थप्राप्तिः, शिवान्नारायणोऽधिक इत्युक्तेर्निरासः, शिवस्य विष्णुसाम्यनिषेधः, शिवाधिक्यम्, भगवद्गीतायाः शिवपरत्वम्, शिवस्य जगत्कारणत्वम् इत्यादिविषयान्निरूप्य शिवस्यैवोपास्यत्वम्, तन्मतस्यैवाश्रयणीयत्वमुपसंहृतम् । एवमेवान्यत्र विद्यमाना विशेषा विदुषां मनोविनोदाय कल्पन्त इत्यत्र नास्ति संशीतिः ।

प्रथमसर्गे कल्युपदेशाख्ये सन्ति षट्त्रिंशत् श्लोकाः । प्रथमश्लोके शिवप्रार्थनं विधाय द्वितीयश्लोके शिवावतारः श्रीशङ्कराचार्यः संरक्षणार्थम् अभ्यर्थ्यते । तत्र व्याख्यायां कपिलकणादादिपरमर्षिप्रतिष्ठिते द्वैते भासमाने शङ्कराचार्यप्रतिपादितम् अद्वैतं कथं विश्वासार्हमिति निरूप्यते । तदर्थं महावाक्यार्थं निरूप्य श्रीविद्यारण्यगुरुवचनं प्रदर्श्यते ।

ततो नारायणनाम्नः श्रीशङ्करभगवत्पादेष्वसूयाग्रस्तत्वं कथयित्वा तदमर्षमूलकारणानि श्रीशङ्करभगवत्पादीयश्रीशिवावतारत्वस्य तत्प्रतिष्ठापिताद्वैतसिद्धान्तसत्यत्वस्य च निरूपकाणि श्रुतिस्मृतिपुराणाभियुक्तवाक्यरूपाणि प्रमाणान्युदाहृतानि।

पूर्वोक्तो नारायणो नाम माध्वो मणिमञ्जरीति माध्वगणप्रसिद्धं निष्प्रमाणकग्रन्थमपि व्यतानीत् । तेन पामराश्चेत्तुष्यन्ति, तुष्यन्तु नाम । तन्निराकरणे नास्माकं यत्नः । किन्तु पुराणादिप्रमाणोपन्यासेन तत्त्वविवेकाय माणिक्यमञ्जरी प्रणीयत इति स्वोद्देशः ख्याप्यते । अयं ग्रन्थः शिवरूपाणां श्रीशङ्कराचार्यपादानां लीलावतारप्रतिपादकः ।

पुराणेषु मध्वविषये विसंवादोऽस्ति - क्वचित् क्रोध इति, कुत्रचित् मूकाभिधदानव इति, जातुचित् मधुरिति कथ्यते मध्वः । अतस्तेषामेकार्थता वक्तव्येति परशुरामकथा प्रस्तूयते। भगवान् जामदग्न्यो दुष्टक्षत्रियसंहारानन्तरं ब्राह्मणेभ्यो भुवं ददौ । ते च तत्र तद्दत्ते भूभागे भगवता न वस्तव्यमिति प्रोचुः। विस्मितो भार्गवः स्ववासार्थं भूमिं दातुं समुद्रं ययाचे । तद्दत्तायां वसुन्धरायां वसन् सोऽनर्थपरम्पराकारणं चिन्तयामास । क्रोध एव सर्वानर्थमूलमिति विज्ञाय तं घोरतरो राक्षसो भवेति शशाप । तदनु क्रोधो वराहशरीरधारी मूकनामा राक्षसो बभूव। स च भगवता शिवेन पार्थप्रसादव्याजेन संहृतः। साक्षाच्छिवं पराजेतुमप्रभुर्मूको मधुःसन् शिवपरिपन्थिनं मन्मथमवललम्बे । मन्मथोऽपि तादृशः शिवमपकर्तुमालोचयन् कालं प्रतीक्षितुमुवाच ।

द्वितीयसर्गे श्रीशङ्करभगवत्पाददिग्विजयाख्ये सप्तचत्वारिंशत् श्लोकाः सन्ति । कल्युपदेशतो मधुनिर्गमनान्तरं बहुतिथे काले व्यतीते भूमण्डले नास्तिकमण्डलेन पूर्णे, वेदेषु



Scanned with CamScanner
Scanned with CamScanner

क्वापि विलीनेषु वेदान्तप्रतिपादितो जीवब्रह्मैक्यवादो गगनकुसुमवल्लुप्तोऽभूत् । तदिदं वृत्तं नारदमुखादाकर्ण्य देवेन्द्रादयः श्रीशङ्करं शरणं गताः सनातनधर्मोद्धाराय प्रार्थयामासुः। प्रसन्नो भवो जगतो भव्याय भूमौ भवितुमपैक्षिष्ट । ततः केरलेषु पूर्णस्रोतसः पूर्णायास्तीरे कालट्यग्रहारात् समीपवर्तिनि वृषाद्रौ लिङ्गरूपेणाविर्बभूव। तत्र पुत्रार्थं तपस्यन्तं विद्याधिराजसुतं शिवगुरुं पुत्रवरदानेनानुजग्राह। तदनु पूर्णे नवममासे शिवगुरोः पत्न्यां विमलाभिधानायां श्रीशङ्करोऽवततार। अत्र कविना जन्मवासरः स्पष्टमेव पुराणप्रमाणमवलम्ब्य प्रदर्श्यते -

कलियुगे ३८८९तमसमायां गतायां विभवसंवत्सरस्य वैशाखमासस्य शुक्लपक्षस्य दशम्यां श्रीशङ्करो जन्म लेभे । सम्प्रति गतकल्यब्दसंख्या ५१०३ इति तयोः १२१४ वर्षाणामन्तरम्। तथा सति आधुनिकमानानुसारेण (२००२ - १२१४) गणनायां सत्यां ७८८तमवर्षे श्रीशङ्करजन्मेति सिध्यति । तदिदमाधुनिकैरपि स्वीकृतम् इति जन्मतिथेरुल्लेखो कवेरपि सङ्गच्छते ।

श्रीशङ्करः प्रथमे वयसि लोकभाषाज्ञानं, द्वितीये वाचनकौशलं, तृतीये काव्यविद्यां लेभे । ततः परं शिशोरस्य लीलाविलासविलोकनेन स्वात्मानमानन्दयितुं तस्य पिता नासीत्। मात्रैव लालितः श्रीशङ्करः पञ्चमे हायने द्विजत्वं गुरुकुलं च प्राप्तो वर्षद्वयावधौ सर्वा विद्या अधीतवान् । ततो मातुरनुज्ञयाष्टमे वयसि संन्यस्य नर्मदातीरे श्रीगुरुगोविन्दभगवत्पादसन्निधौ यतिदीक्षां सम्पाद्य तदाज्ञया वाराणसीं गतः । तत्रैव सनन्दनापराभिधानस्य शिष्यस्य पद्मपादस्य सन्दर्शनं संवृत्तम् । तदानीमायुषो दैवदत्तस्य समाप्तावपि विश्वनाथस्य प्रसादेन वर्षाष्टकं पुनरायुः प्राप्तम् । ततो बदरिकाश्रमं गत्वा तत्त्वं मुनीनां सकाशे सुविचार्य करतलबदरवन्निश्चित्य द्वादशे वर्षे भाष्याणि प्रणीय पुनः काशीक्षेत्रं समाययौ । तत्र चतुर्वर्षपर्यन्तं शिष्येभ्यः पद्मपादादिभ्यो भाष्याण्यध्यापयामास। तदानीं शिवदत्तमायुः समाप्तमपि पुनर्व्यासप्रसादात् वर्षाणां षोडशकं नास्तिकानां निराकरणार्थमायुर्लब्धम् । ततो माहिष्मतीं गत्वा मण्डनपण्डितं वादे विजित्य संन्यासदीक्षां ददौ । तद्भार्यामपि दुर्वाससः शापान्मानुषं रूपं दधानां शारदां परकायप्रवेशानन्तरं पराभूय ब्रह्मलोकं यान्तीं वनदुर्गामन्त्रेण निरुध्य शृङ्गगिरौ सुन्दरे मन्दिरे प्रत्यतिष्ठिपत् । ततो मातुः प्रायणं विज्ञाय पूर्वप्रतिज्ञां पालयन् तदन्तिके स्थित्वा वह्निसंस्कारं निर्वर्तयामास । तदा दाहायासहकुर्वतस्तान् वेदबाह्यान् विधायासूयानलदग्धां पद्मपादप्रणीतां पञ्चपादिकां सप्रपञ्चं पञ्चजनोपकारार्थं समुद्धृत्य गौडदेशं गतः । ततो गौडपादसमागमः, काश्मीरयात्रा, सर्वज्ञपीठारोहणम् इत्यादि सविस्तरं श्रीशङ्करभगवत्पादचरितं वर्ण्यते ।



Scanned with CamScanner

तृतीयसर्गे मध्वदौरात्म्यप्रकाशाभिधे त्रिंशत् पद्यानि सन्ति । तत्र प्रथमं मङ्गलाचरणं श्रीशङ्करभगवत्पादप्रार्थनारूपं विहितम् - कलिसञ्जाताद्वैतसिद्धान्तस्य विध्वंसकानां मध्वाद्यभिनवद्वैतवादिनां विनाशाय विद्यारण्यरूपेण योऽयं श्रीशङ्करभगवत्पाद एव पुनरवतीर्य सनातनधर्मं पुनः प्रतिष्ठापितवान् स समेषां कल्याणमातनोतु इति ।

शिवद्रोहाय समुचितं समयं प्रतीक्षमाणो मधुः श्रीशङ्करभगवत्पादानां कैलासगमनं विज्ञाय एकोनविंशत्युत्तरशतद्वयोपस्कृतचतुःसहस्रीपरिमिते(४२१९) कलिवर्षे गते विलम्बिसंवत्सरे आषाढमासे कृष्णपक्षस्य चतुर्थ्यां जन्म लेभे । लोकेन मध्व इति व्यवहृतः स शिशुरन्वर्थनामेति व्युत्पत्तिप्रदर्शनपुरस्सरं वक्ति कविः ।

कृतोपनयनो बालो मध्वः शास्त्रमध्येतुं गोकर्णक्षेत्रे तदानीं वर्तमानं पद्मपादाचार्यमुपसन्नः सिद्धान्तं सम्यग् विज्ञायापि पूर्वपक्षे बद्धादरो बभूव । तदिदमालक्ष्य पद्मपादस्तं - सिद्धान्तानभिज्ञो भवेति - शशाप ।

अथ पद्मपादे ब्रह्मभूयं गते संन्यासं स्वीकृत्य मध्वो नवीनं मतम् आविष्कृतवान् । तन्मतानुसारेण - तत्त्वमस्यादिवाक्यानि जीवब्रह्मणोर्भेदं दर्शयन्ति, शिवपारम्यबोधकानि पुराणानि तामसानि, तप्तमुद्रादिधारणमपि विधिविहितम् । बहूनां वाक्यानां श्रुतित्वं स्वयमेव स कल्पयति । सन्ति केचन तं गुरुमिति मन्वानाः । एवं प्रतारकस्य तस्य महान् गुदगदो जातः, येन अष्टनवत्युत्तरद्विशत्युपस्कृतसहस्रचतुष्टयोपेतकलिहायने(४२९८), १११९तमे शालिवाहनशके गते स दिवं गतः ।

तुरीयसर्गे विद्यारण्यविजयाभिधाने च त्रिणवतिः श्लोकाः सन्ति । अत्र विद्यारण्यमुनिवर्यकथा विस्तारेण प्रस्तुता । माध्वैरद्वैतनये शैथिल्यमापादिते तदुद्दिधीर्षया एकोनत्रिंशदुत्तरशतत्रयोपेतचतुःसहस्रीरूपकलिशके(४३२९), पञ्चाशदुत्तरैकादशशतीमित शालिवाहनशके(११५०) गते सर्वधारिसंवत्सरस्य चैत्रमासे शुक्लपक्षे दशम्यां स्वयं श्रीशङ्करभगवत्पादो माधवाचार्यात्मनाविर्बभूव । तस्य पिता मायणः, माता च सुकीर्तिः । पितुः सकाशादेव सकलाः कला विज्ञाय माधवो विवाहसंस्कारेण संस्कृतः । तेन पुत्रोदयमनु बहवो यज्ञा अनुष्ठिताः, बहवो ग्रन्थाः प्रणीताः, बहवश्च शिष्याः पाठिताः । तस्य कदाचित् अक्षोभ्यतीर्थेन सह वादो जातः, यस्य ग्रन्थेऽस्मिन् विस्तरेण वर्णनमस्ति ।

क्रोधिनामसंवत्सरेऽक्षोभ्यभिक्षुः पराजितः । ततो हृद्रोगमापन्नो विश्वावसुसंवत्सरे



Scanned with CamScanner

मार्गशीर्षशुक्लपञ्चम्यां सप्तषष्ट्युत्तरैकादशशतीमिते शालिवाहनशके(११६७) गते स दिवं गतः । अत्र व्याख्यायां विस्तरेणोपपत्तिः प्रदर्शिता ।

ततो माधवाचार्यस्य पम्पायात्रा, तपश्चरणम्, भुवनेश्वरीसाक्षात्कारः, एकोनत्रिंशदुत्तरचतुःशत्युपस्कृतचतुःसहस्रीपरिमिते(४४२९) कलिवर्षे, पञ्चाशदुत्तरद्वादशीशती परिमिते(१२५०) शालिवाहनशके गते संन्यासस्वीकारः, शृङ्गिभट्टेन सह संवादः, बदरीयात्रा, शृङ्गगिरियात्रा, तत्र श्रीभारतीतीर्थदर्शनं, सम्भाषणम्, तत्प्रसादात् संन्यासदीक्षा, विद्यारण्यपुरप्रतिष्ठा, पुनः पम्पागमनं, तत्र श्रीविरूपाक्षसाक्षात्कारः, साम्राज्यस्थापनमित्यादिकथां विस्तरेणोपवर्ण्य सप्ताशीत्युत्तरचतुःशतीमितसहस्रसम्मित (१४८७)कलिवर्षे, अष्टोत्तरत्रिशतीमितसहस्रसम्मिते (१३०८) शालिवाहनशके गते क्षयाब्दचैत्रीयशुक्लत्रयोदश्यां गुहाप्रवेशः कथितः ।

एवमाहत्य षडधिकद्विशतश्लोका अत्र सन्ति । व्याख्या तु सर्वत्र सपुराणादिप्रमाणा विस्तरेण मूलार्थं विशदयन्ती विराजते । सर्वथा प्रामाणिको ग्रन्थोऽयमिदम्प्रथमतया सद्गुरुप्रसादेन प्राकाश्यं नीयमानः सुहृदयहृदयावर्जको भवतीति विश्वसिमि ।

सव्याख्यस्यास्य काव्यस्य रघुनाथसूरिविरचितस्य प्रकाशनार्थं प्रत्यक्षेण परोक्षेण वा साह्यं कृतवद्भ्यः सन्ति शतशो धन्यवादाः ।

विजयनगरम्, मैसूरु
श्रीशा.शके १९२५
चित्रभानुसं. विजयदशमी

विदुषामाश्रवः
हित्लळ्ळिसूर्यनारायणनागेन्द्रभट्टः





Scanned with CamScanner

# माणिक्यमञ्जर्युक्ता ग्रन्था ग्रन्थभागाश्च -





Scanned with CamScanner

Scanned with CamScanner





Scanned with CamScanner

## ग्रन्थकाराः





Scanned with CamScanner

Scanned with CamScanner

श्रीः

# अथ माणिक्यमञ्जरी सटीका

श्रीगणेशाय नमः । श्रीसरस्वत्यै नमः ।

## मूलम्

गङ्गायामिव लोचनाग्नितपनाच्छौष्क्यं गतायां जटा-
वल्ल्यै गाण्डिवभेदनिम्नमिषतो निर्माय तोयाशयम् ।
सेक्तुं तां शिरसीव यस्य निहितश्चन्द्रः पृथासूनुना
प्रज्ञानेन्दुकलावतंसितशिराः श्रेयांसि दद्यात् स नः ।। १ ।।

## व्याख्या -

चक्रामासतुरब्जकौ शुभहयामासुः समस्तागमाः
सूतामास पयोजभूः पृथुरसामासावनीमण्डलम् ।
चापामास सुरालयो दृढगुणामासाहिराडच्युतो
बाणामास शरव्यति स्म हि पुरां यस्य त्रयं पातु नः ।। १ ।।

अथ तत्रभवान् रघुनाथनामा विद्वान् प्रारिप्सितमाणिक्यमञ्जर्याख्यप्रबन्धस्यानन्तरायं परिसमाप्तिं कामयमानः समाप्तिकामो मङ्गलमाचरेत् इति शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताके मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते इत्यादिभगवद्भाष्यकारपतञ्जलि शासनानुगृहीते

आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्

इत्याचार्यदण्ड्यनुमोदिते च मङ्गले भगवत्प्रार्थनारूपं मङ्गलमाचाराविच्छेदपालनायाचरन् शिष्यशिक्षार्थं प्रबन्धमुखे तदुपनिबध्नाति - गङ्गायामिति । अत्र शिवमस्तकविद्योतमानज्ञानचन्द्र कलामुत्प्रेक्षते । गङ्गायां हरशिरसि विभासमानायां मन्दाकिन्यां लोचनाग्निना - शिवललाट लोचनवह्निना यत्तपनं सन्तापस्तस्मादिवेत्युत्प्रेक्षा । शौष्क्यं शुष्कतां गतायां सत्यां जटावल्ल्यै जटालतार्थमिति तादर्थ्ये चतुर्थी । गङ्गाशुष्कीभवनेन तान्तशिवजटालतापोषणार्थमित्यर्थः । पृथायाः - कुन्त्याः सूनुना - पुत्रेणार्जुनेन कर्त्रा गाण्डि(२)वेन - तन्नामकधनुषा करणेन, यो भेदो भेदनं, प्रहरणमिति यावत् । तेन यन्निम्नं गर्तस्तस्य मिषतः - व्याजात्, तोयाशयम् - जलाशयम्,



Scanned with CamScanner

Scanned with CamScanner

निर्माय - कृत्वा, तां - जटालतां सेक्तुम् - उक्षितुम्, आर्द्रीकर्तुमिति यावत् । जलाशयोदकेनेति शेषः । चन्द्र ओषधीशत्वेन प्रसिद्धश्चन्द्रमाः, यस्य भगवतो महादेवस्य, शिरसि मस्तके, निहितो निक्षिप्त इवेत्युत्प्रेक्षा । अस्तीत्यध्याहारः । प्रज्ञानमितीन्दुस्तस्य कलया, अवतंसितम् - अलङ्कृतम्, शिरो यस्य तथोक्तः । स यच्छब्दोपात्तः सदाशिवः, नः - अस्मभ्यम्, श्रेयांसि दद्यात् इति । प्रार्थनायां लिङ् । प्रज्ञानेन्दुकलावतंसितशिरा इति विशेषणस्य शिवगतज्ञानप्रदत्वकथनाभि प्रायकत्वेन साभिप्रायत्वात् परिकरालङ्कारः ।

अलङ्कारः परिकरः साभिप्राये विशेषणे

इति लक्षणात् ।

शिवस्य निरतिशयज्ञानप्रदत्वं चन्द्रमौलितैवाभिव्यञ्जयति । तथा हि - यथा पाठयितारः पिपठिषूणामभिज्ञानाय पाठशालाद्यूर्ध्वदेशे पाठध्वजादीन् निखातयन्ति, एवमयं शिवोऽपि स्वयं ज्ञानप्रद इति प्रत्यायनेन लोकान् अनुजिघृक्षुर्ज्ञानमयीं चन्द्रकलां शिरसि धारयति । शिवस्य ज्ञानप्रदत्वं स्मृत्यन्तरेऽभिहितम् -

आरोग्यं भास्करादिच्छेत् ज्ञानमिच्छेन्महेश्वरात्

इति । पतञ्जलिरपि योगशास्त्रे - क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः(यो.सू.१.२८) इति प्रस्तुत्य, स सर्वेषामपि* गुरुः कालेनानवच्छेदात्(यो.सू.१.३०) इति सूत्रयामास । शिवधृतचन्द्रस्य ज्ञानस्वरूपत्वं शिवपुराणेऽभिहितम् -

ज्ञानचन्द्रकलाचूडं दशदिग्बाहुमण्डलम् ।
त्रैगुण्यादिमयैर्भान्तं दिव्यैर्दशभिरायुधैः ।।(३) इति ।

इत्थं च ज्ञानप्रदं शिवं ज्ञानरूपं श्रेयोऽर्थयामासेत्याकूतम् । श्रेयांसीति बहुवचनं तु विषयभेदगतज्ञानभेदाभिप्रायेणेति वेद्यम् । ततश्च सर्वविषयकं ज्ञानं दद्यादिति फलितोऽर्थः। अत्र स्वभावतो भगवन्मस्तकभासमानमन्दकिन्यां नयनानलतापाच्छौष्क्यमुत्प्रेक्षितमित्युत्प्रेक्षा लङ्कारः । अनेन जटावल्ल्यां तान्तत्वप्रतीतेरलङ्कारेण वस्तुध्वनिः । भगवन्मौलिगतपार्थप्रहार जनितव्रणगर्ते तत्त्वं मिषशब्देनापह्नुत्य जलाशयत्वोक्तेः कैतवापह्नुत्यलङ्कारः । अनेन च नदीमातृकसस्यादिपोषणार्थं महातपतापशुष्कीभूतोदकनद्यादौ क्रियमाणकुल्यादेर्लोकसिद्धस्य वस्तुनः प्रतीतेरलङ्कारेण वस्तुध्वनिः । निसर्गतो हरशिरसि विद्योतमाने ज्ञानचन्द्रमसि जटालतासेचकतया

* टि - मद्रासप्रान्तीयवाणीविलासमुद्रणालये मुद्रिते पातञ्जलदर्शने पूर्वेषामपि इति पाठो वर्तते । तस्यार्थः - ब्रह्मादीनामपि इति तद्व्याख्यायां पदचन्द्रिकाख्यायाम्



Scanned with CamScanner
Scanned with CamScanner

पार्थकर्तृकप्रसिद्धचन्द्रविन्यसनोत्प्रेक्षणाद् उत्प्रेक्षालङ्कारः । स च शिवमस्तके पार्थकर्तृकचन्द्रविन्यसनासम्बन्धेऽपि तत्सम्बन्धोक्तिमूलातिशयोक्त्युज्जीवित इत्यनयोः सङ्करः। एते चापह्नवोत्प्रेक्षे जलाशयनिर्माणे समुचितसेचकविन्यासे च शौष्क्यं गतायाम् इत्यादिमवाक्यार्थस्य हेतुत्वाद् वाक्यार्थहेतुककाव्यलिङ्गप्रतिबोद्धापिते(?) इत्यङ्गीभावेन सङ्करः । सर्वोऽप्ययं जटावल्लीरूपकोज्जीवित इति सर्वेषां सङ्करः । सकलजगदुन्मूलनप्रवृत्तगङ्गानदीनिरोधेन दुष्टजननिबर्हणत्वं, सांसारिकदुःखमनुभवतो जगतः किञ्चित्कालं महासुषुप्त्यापादनेन विश्रान्तिदानाय कृतफाललोचनग्रहणेन परमदयालुतां, मुनिजनलक्षणजटाधरत्वेन सत्त्वसम्पत्तिं, पार्थप्रहारवत्त्वेन भक्तापराधसोढृत्वं, भक्तजनशाश्वतकीर्तिसम्पादनदीक्षितत्वं चाभिप्रेत्य कविरयं पद्येऽस्मिन्(४) गङ्गाधरत्व-भाललोचनत्व-जटाधरत्व-पार्थप्रहारित्वान्यभिव्याञ्जयामास ।।

अत्रादौ देवतावाचकगङ्गाप्रयोगाद् वर्णगणादेरभ्युच्चयः । तथोक्तमभियुक्तैः -

देवतावाचकाः शब्दा ये च भद्रादिवाचकाः ।
ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा ।। इति ।

आदौ भूदेवताकमगणप्रयोगात् सम्पल्लाभः । तथोक्तम् -

मो भूमिस्त्रिगुरुः श्रियं वितनुते इति ।

शार्दूलविक्रीडितं वृत्तम् -

सूर्याश्वैर्मसजास्ततः सगुरवः शार्दूलविक्रीडितम्

इति लक्षणात् ।

ननु - शिवस्य श्मशानवासित्वेनामङ्गलत्वात् न श्रेयःप्रदत्वमिति चेन्न - महाप्रलयस्यैव श्मशानत्वेन तादात्विकस्थित्यनभ्युपगमे शिवे विभुत्वनित्यत्वादीनामपायप्रसङ्गात् । परैरपि परमार्थतयाभ्युपगतपरवस्तुनि तदङ्गीकर्तव्यम्, उक्तहेतोः । न चैवं क्षुद्रश्मशानेष्वपि वासप्रसिद्धेरपावनत्वं शिवस्येति वाच्यम् । भद्रकालीभैरवभूतगणेभ्यो जगत्संहारकेभ्यो लोकान् रिरक्षुणा तत्प्रचारवत्सु सन्ध्यासमयेष्वानन्दनृत्तप्रदर्शनमनसा शिवेन रचितश्मशानवासस्य परमदयालुताबोधकतया लिङ्गपुराणेऽभिहितत्वात् । भारते आनुशासनिके पर्वणि - श्मशानवासिता तव किमर्थेति गिरिजयानुयुक्तेन शिवेन श्मशानवासितां सकलप्रजासंहारकानां भूतानां बाधार्थेत्युपक्रम्य

श्मशानादपि मत्स्थानान्नान्यन्मेध्यतमं भुवि ।
मुनिभिर्मेध्यमित्युक्तं स्थानं यत्र वसाम्यहम् ।।



Scanned with CamScanner

आचरद्भिर्व्रतं घोरं मोक्षकामैश्च सेव्यते ।

इत्यादिना श्मशानस्य मेध्यत्वाभिधानात् । प्रह्लादेनापि तीर्थयात्रां कुर्वता श्मशानं गत्वा तत्र स्थितो महाकालः पूजित इति वामनपुराणोक्त्या श्मशानस्य(५) शिवावस्थानात् पावित्र्यप्रतीतेश्च। एतेन चिताभस्मोद्धूलनेनापवित्रत्वोक्तिः परास्ता । श्मशानस्य पवित्रत्वेन तद्भस्मनः पवित्रताया अर्थतः सिद्धत्वात् ।

चिताभस्मविलिप्ताङ्गः शिवमन्त्रपरायणः ।
जिगाय दानवान् दैत्यान् हरिः शम्भोरनुग्रहात् ।।

इति शिवपुराणवचनेन तद्भस्मनः पवित्रत्वेन सर्वदेवशास्तृत्वनिर्धारणाच्च ।

ननु - पिशाचाद्यपवित्रप्राणिपरिवेष्टितत्वाच्छिवोऽपवित्र इति चेन्मैवम् । पुत्रीयतो ब्रह्मणो ललाटतटान्नीललोहितरुद्रात्मनाविर्भूय तत्प्रार्थनया स्वसदृशान्नीललोहितरुद्रानुत्पाद्य तैः सहान्तर्हितो भगवान् भवानीवल्लभ इति कौर्म्योक्त्या शिवानुगतभूतप्रेतपिशाचादिरूपाणां शिवांशत्वप्रतीतेः । सौषुप्तिके पर्वणि - तदानीं सृष्टानामेव रुद्राणां पिशाचादिपदैर्व्यवहारस्य शिवसायुज्यस्य च स्फुटतरं निरूपणात् । रुद्राध्यायेऽपि - नमो रुद्रेभ्यो ये पृथिव्याम् इति चतुर्थ्यन्तेन तेषामेव कीर्तनाच्च । न च पिशाचादिरूपपार्षदनिवेदितमांसादिपरिग्रहणं च दृश्यते। तच्च शिवस्यापवित्रतापादकमिति वाच्यम् । भक्तजात्युचिततन्निवेदितमांसादिपरिग्रहस्य दुष्टत्वात्। विष्णुभक्तेनापि घण्टाकर्णाख्यपिशाचेन निवेदितब्राह्मणशवमांसादीनां विष्णुकृतपरिग्रहस्य भारते निरूपणात् । एतेन श्मशानरहितोऽशुचिः पिशाचसेवितः शिवो न शुद्धसात्विकैः सेव्य इत्युक्तिः केषाञ्चित् परास्ता । नित्यशुद्धस्य तस्य दोषलेपाभावात् । स्कान्दे केदारखण्डे - मेरुपृष्ठे रावणवधोपायं चिन्तयन्तो देवाः शिवं प्रसाद्य लब्धबलो रावणस्तदधिकतपोबलं विना भवद्भिर्जेतुं न शक्य इति विष्णुना बोधिताः । तथा तपः कर्तुमक्षमाः शिवमेव प्रसाद्य(६) रावणं जेष्याम इति मनीषया शिवलोकं गताः । शिवराजधानीद्वारस्थितेन नन्दिकेश्वरेण तपोभिः कायशोषणमकृत्वा भवद्भिर्द्रष्टुं न शक्यः शिव इति बोधिताः प्राक् स्वस्मिन् कृतापराधं स्वेन शप्तं रावणं स्वयमपि जिघांसता वैकुण्ठं नीताः, तत्र विष्णुना स्वयं तपः कर्तुमक्षमाणां देवानामभीप्सितं कार्यं रावणस्य तपोवीर्यभ्रंशमत्यन्ता नुचितसीतानुरागमोहानुवृत्तिसम्पादनेन कारयित्वा निबर्हणीयमिति तदुपायोप देशेन समाश्वासिताः। तदर्थं विष्णुः सीतारूपया विद्यया सहावनाववतीर्णश्चेति प्रपञ्चितत्वेन शिवस्य शुद्धसात्विकतपस्विजनसेव्यत्वावगमाच्च ।



Scanned with CamScanner

ननु - कपालमालाधारणमीश्वरस्यापवित्रतापादकमिति चेन्न । अतीतानन्तकल्पपितामहानुपसंहृत्य कृततदीयकपालमालाधारणस्य शिवगतपरमौत्तम्यख्यापकत्वात्।

किञ्च, विष्णुनिग्रहेणाप्युत्तमत्वं मन्यामहे । तस्य नियन्तृधर्मत्वात् । तन्निग्रहश्च पुराणेष्वभिहितः । तथाहि स्कान्दे -

यस्य हस्ते ब्रह्मशिरो यस्य हस्ते हरेः शवः ।
यस्य हारे कूर्मपृष्ठं तस्य को वाधिकः समः ।। इति ।

स्कान्दे कालीखण्डे -

ततः प्राण्युपकाराय कूर्मं संहृत्य गर्वितम् ।
तदङ्गं भूषणत्वेन धारयामास शङ्करः ।। इति ।

तत्रैव शरभाध्याये -

दग्धो हि मम शूलाग्रे विष्वक्सेन छलाद्भवान् ।
दक्षयज्ञे शिरश्छिन्नं मया ते यज्ञरूपिणा ।। इति ।

सनत्कुमारसंहितायाम् -

उत्पाट्य दंष्ट्रां कोलस्य दधावुरसि भूषणम् ।
कपर्दगतचन्द्रांशं ध्रियमाणमथापरम् ।। इति ।

वायुपुराणेऽपि -

विष्णोरपि नृसिंहस्य रभसा शारभाकृतिः ।
बिभेद पद्भ्यामाक्रम्य हृदयं नखरैः खरैः ।। इति ।

अथर्वणवेदेऽपि(७)-

त्र्यम्बक एको नारायणशिरश्चञ्चुना चकर्त इति ।

एतत् सर्वमभिप्रेत्य महानाटके बोधायनेनोक्तम् -

पादे विष्णुविलोचनं कटितटे नित्यं नृसिंहाजिनं
हारे कूर्मशिरः कराम्बुजतले कङ्कालनामायुधम् ।
शूलाग्रे शवकेशवो हरिशिरोमाला च कण्ठे तथा
पात्रं ब्रह्मशिरः कपालमभवद् व्यक्तं पुराणोदितम् ।। इति ।

ननु ब्रह्मविष्ण्वादिनिग्रहोऽपि शिवं क्रूरकर्माणमाख्याति । अत एवोग्रो भीम इत्याद्याख्यापि



Scanned with CamScanner

शिवस्य युक्तेति चेन्न - दुष्टनियन्तृधर्मत्वात्। नृसिंहाद्यवतारकृतदौष्ट्यस्य लैङ्गादिपुराणप्रसिद्धत्वेन तन्निग्रहस्य न्याय्यतायाः शिवपुराणेऽभिहितत्वात् । तथा हि शिवपुराणे -

ये पुनर्निग्रहाः केचिद् विष्ण्वादिषु नियोजिताः ।
तेऽपि लोकहितायैव कृताः श्रीकण्ठमूर्तिना ।।
अण्डस्यास्याधिपत्यं हि श्रीकण्ठस्य न संशयः ।
श्रीकण्ठाख्यां यशोमूर्तिं क्रीडंस्तामधितिष्ठति ।।
सदोषा एव देवाद्या निगृहीता यथोचितम् ।
ततस्तेऽपि विपाप्मानः प्रजाश्च विगतज्वराः ।।
निग्रहोऽपि स्वरूपेण विदुषां न जुगुप्सितः ।
अत एव हि दण्ड्येषु दण्डो राज्ञां प्रशस्यते ।।
यत्सिद्धिरीश्वरत्वेन कार्यवर्गस्य कृत्स्नशः ।
स न चेदीशतां कुर्याज्जगतः कथमीश्वरः ।।
हिते सदा विषण्णानामीश्वरः स्यान्निदर्शनम् ।
स कथं दूष्यते सद्भिरसतामेव निग्रहात् ।।
सर्वोऽपि निग्रहो लोके न च विद्वेषपूर्वतः ।
न हि द्वेष्टि पिता पुत्रं यो निगृह्यापि शिक्षयेत् ।। इति ।

यदप्युक्तम् - क्रूरकर्मत्वादेवोग्रो भीम इत्याद्याख्यापि शिवस्य युक्तेति, तन्न - उग्रभीमशब्दाभ्यां शिवगतसर्वोत्तमत्वस्य, सर्वनियन्तृत्वस्य चैवाभिधानात् । (८) तथाहि - उत्पूर्वाद् गमेरुद्गच्छत्युत्तमो भवतीत्यर्थे 'ऋज्रेन्द्राग्रे(२.२९)' त्याद्यौणादिकसूत्रेण ऋक्(रन्)प्रत्ययान्ततया निपातित उग्रशब्दः सर्वोत्तमत्वम् आख्याति । 'उग्रोऽस्युग्रोऽहं भूयासम्' इति श्रुतावुग्रत्वस्याशास्यत्वश्रवणात् । भीमशब्दस्तु भयङ्करवाच्येव तस्योत्कर्षमावहति । सर्वजगद्भयहेतुत्वस्य सकलनियन्तृब्रह्मधर्मत्वात्। उक्तार्थस्य - 'भीषास्माद्वातः पवते' इति श्रुत्या निरूपणात्। एतेन ब्रह्मशिरोलवनमात्रेण शिवं क्रूरकर्माणं जल्पन्तः परास्ताः । पञ्चवक्त्रतामात्रेणात्मानं शिवसममवेत्य पितुः शिवस्यावज्ञां कृतवतः पुत्रस्य ब्रह्मणः शिक्षणस्य न्याय्यत्वात् ।

नहि द्वेष्टि पिता पुत्रं यो निगृह्यापि शिक्षयेत्

इति शिवपुराणेऽभिधानात् । ब्रह्मणः शिवपुत्रत्वं श्रुतिपुराणप्रसिद्धम् । तथाहि - 'यो ब्रह्माणं



Scanned with CamScanner

विदधाति पूर्वम्' इति श्रुतिः । स्कान्दे कालिखण्डे -

प्रकृतिस्त्वं पुमान् रुद्रो यतस्तद्वीर्यमाहितम् ।

त्वन्नाभिकमलाज्जातः पञ्चवक्त्रः पितामहः ।। इति ।

ननु - एवं शिवोऽपि ब्रह्मपुत्रस्तल्ललाटादाविर्भावात् इति चेत्, शृणु -

एवं कल्पेषु कल्पेषु ब्रह्मविष्णुमहेश्वराः ।

परस्परस्माज्जायन्ते परस्परजयैषिणः ।। इति।

वायुसंहितादिषु परस्परस्मान्मूर्तित्रयोत्पत्तेरभिधानेन विष्णोरपि शिवपौत्रत्वं कुतो न जानीषे?

आस्तां तावदिदम् । स्तम्भप्रसूतविष्णोः स्तम्भपुत्रत्वमिव नीललोहितरुद्रात्मना ब्रह्मललाटतटादाविर्भूतस्य शिवस्य ब्रह्मपुत्रत्वमपि न बाधकम् । ललाटस्याविमुक्तोपासनास्थानत्वेन तत्रोत्पत्तेरनिन्द्यत्वात् । तदुक्तं स्कान्दे -

सृष्ट्यर्थं जगतां पूर्वं शङ्करं लोकशङ्करम् ।

ललाटेऽचिन्तयद्ब्रह्मा तपस्युग्रे व्यवस्थितः ।।(९)

तल्ललाटादाविरभूत् सृष्ट्यर्थं तत्र दूषणम् । इति ।

एतेन रोदितीति रुद्रः इति वदन्तः परास्ताः । सर्वलोकनियन्तरि भगवति शिवे रोदनकल्पनाया अन्याय्यत्वात् । तस्मात् रुद् - दुःखं, द्रावयति इत्यर्थो बोध्यः । यदि च रोदनकर्तर्येव भवतामभिनिवेशस्तर्हि रुद्रो बहुशिरा बभ्रुः इति विष्णुसहस्रनामगतरुद्रशब्दस्यापि तदर्थापत्तेर्दुर्वारतैव स्यात् । रामकृष्णाद्यवतारेषु विष्णुकृतरोदनस्य पुराणेषूपलम्भात् ।

प्रकृतमनुसरामः । ननु शिवस्य यदि विष्णुनिग्राहकत्वम्, तर्हि स्वेन सह युद्धमभिलषते बाणासुरस्य किमर्थं विष्णुं प्रदर्शितवान् शिवः ? तेन चासामर्थ्यमभिव्यक्तमेव इति चेन्न - स्वदत्तवरमोघीकरणभिया विष्णुना तद्बाहुमदमपगमय्य लब्धसात्विकभावस्य बाणस्य स्वपार्षदगणे सन्निवेशार्थमौदासीन्यस्यावलम्बनात् । न चैवं भस्मासुराद् वरफलं जिज्ञासोर्भयात् पलायमानेन विष्णुकारिततद्वधेन स्वसामर्थ्यमाविष्कृतमेव शिवेन इति वाच्यम् । भस्मासुरवधार्थं विष्णु ध्रियमाणमोहिनीरूपे भैरवोत्पादनाय भस्मासुरस्य विष्णुसमीपप्रापणात् । उक्तार्थस्य स्कान्देऽभिधानात्। तथाहि - स्त्रीरूपिणा विष्णुना भस्मासुरं मोहयित्वा भस्मीकृत्य शिवं प्रत्येवमुक्तम् -

ततो नारायणी भीरू रुद्रं प्राप्य जगाद तत् ।

नारायणीं समालिङ्ग्य भुजाभ्यां साधु साध्विति ।।



Scanned with CamScanner

भैरवं जनयामास कापालिकमतेश्वरम् । इति ।

एतदेवाभिप्रेत्य भविष्यपुराणे वेदपादस्तवेऽप्युक्तम् -

नारायणी सर्वकलाप्रवीणा विमुच्य नीवीं रहसि प्रविष्टा ।

तं भीरुरुग्रं परिरभ्य दोर्भ्यामधस्विदासीदुपरिस्विदासीत् ।। इति ।

(१०) अत एव शिवस्य विष्णुवल्लभः इत्याख्यापि युक्ता । अत एव

नारायणीसहचराय नमः शिवाय

इत्यद्वैतविद्याचार्यैर्मध्वतन्त्रमुखमर्दनादिकृतैरप्पय्यदीक्षितचरणैर्न्यायरक्षामण्याख्यग्रन्थमङ्गल पद्येऽभिहितम् । यदि च बाणासुरबाहुमदापनयनभस्मासुरवधेशधनुर्भङ्गादिना विष्णुः समर्थ इति जानीषे, तर्हि त्वमेवं प्रष्टव्यः -

स्वापत्याङ्गविनाशनेऽपि च शिरश्छेदे स्वसूनोर्विधेः

स्वाङ्गस्य त्रिशिखेन भेदनविधौ रुद्रेण दैत्यद्विषः ।

शक्तिः कुत्र गताद्य बाणसमरे प्राप्ता तथा जीरिण-

श्चापस्यास्य हि खण्डने रघुभुवो जाता जडस्त्वं वद ।। इति दिक् ।

ननु गङ्गाधरत्वं न्यूनतापादकम् । गङ्गाया विष्णुपादजलत्वात् इति चेत्, भ्रान्तोऽसि। शिवधृतगङ्गाया विष्णुपदीभिन्नहैमवतीजलत्वात् । तथाहि - एका हैमवती, अन्या विष्णुपदी। तत्राद्यायामुमाज्यायस्यां कुटिलानाम्न्यां हिमवत्सुतायां देवैः शिववीर्यधारणाय ब्रह्मलोकं प्रापितायां, तत्र च नेयं शिववीर्यधारणक्षमेति ब्रह्मवचनतः क्रुद्धायां, अथ च जनार्दनं प्रसाद्य लब्धसामर्थ्याहं धारयिष्यामि तद्वीर्यमिति प्रज्वलन्त्यां कुपितब्रह्मशापतो जलमयी भूत्वा ब्रह्मलोकं प्लावयन्त्यां तदानीं ब्रह्मणा ऋगादिवेदैर्निबद्धायां च सत्यां, देवतागणप्रार्थनतो निपीतवत्यपि वह्नौ शिववीर्यं सेनान्युत्पत्तिमलभमानेषु देवेषु ब्रह्मसमीपं प्राप्य प्रार्थयत्सु गङ्गेयं तारकजेतारं पुत्रं वह्निनिक्षिप्तशिववीर्यतो जनयिष्यत्युमायाश्च तदभिमतं भविष्यतीत्युक्तवति ब्रह्मणि तथैव विरचितवति हुताशने, ततश्च भूयसि काले गते ब्रह्मवचनतो हिमवत्कान्तारगतशरवणे(११) न्यपातयद्गङ्गा गर्भमित्युक्तलक्षणां कुटिलापरपर्यायां हिमवत्सुतां गङ्गामुपलभ्य ब्रह्मप्रसादतो भगीरथः समानीय भूमार्गतः पाताललोकं कपिलकोपानलदग्धकलेवरान् सगरतनूजाननीनयत् सद्गतिमिति वामनपुराणाद् अवगम्यते । अन्या तूर्ध्वप्रसारितत्रिविक्रमपादनिर्भिन्नोर्ध्वाण्डनिस्सृता पतन्ती चाधो देवानां विहारार्थं केनचिदंशेन व्योम्नि स्थित्वांशान्तरेण मेरोरुपरि ब्रह्मपुर्याश्चतसृषु



Scanned with CamScanner

Scanned with CamScanner

दिक्षु प्रवहानिलेन चतुर्धा विभक्ता निपत्य प्राच्यादिसमुद्रान् प्रविष्टा, न भूलोके प्रवहन्ती स्थितेति भारतकूर्मपुराणवचनस्वारस्यानुरोधादवगम्यते । तथा हि भारते सभापर्वणि -

तच्छिद्रात् स्यन्दिता तत्र पदाद् भ्रष्टाथ निम्नगा ।
संसारसागरघ्नी सा प्रविष्टा सागरं तदा ।। इति ।

कूर्मपुराणेऽपि -

अथाण्डभेदादपतच्च शीतलं महाजलं पुण्यकृद्भिश्च जुष्टम् ।
प्रवर्ततेऽद्यापि सरिद्वरा तदा गङ्गेत्युक्ता ब्रह्मणा व्योम्नि संस्था ।। इति ।

देवानां विहारार्थं केनचिदंशेन व्योम्नि स्थिता, अवशिष्टा सागरेऽपतद् इत्युभयानुरोधाद् योज्यम्।

ननु - विष्णुपद्येव शिवेन शिरसा धृतेति विष्णुपुराणादिषु वर्णितमिति चेद् अत्र ब्रूमः - या च विष्णुपद्यूर्ध्वकटाहाद् विनिर्गत्य केनचिदंशेन देवताविहारार्थं गगनतले स्थित्वांशान्तरेण भूमौ निपत्य सागरमेव प्रविष्टेति भारतकूर्मपुराणाभ्यामवगम्यते । तस्या व्योमगङ्गाया ब्रह्मलोकाद् भगीरथसमानीयमानहैमवतीजले प्रवेशेनाभेदोपचाराद् विष्णुपदी भगीरथेनानीता शिवेन च शिरसा धृतेति पुराणान्तराणि योजनीयानि । अन्यथा त्रिविक्रमावतारसमय एव गगनान्निपत्य भुवि प्रवहन्त्यां च तस्यां कथं भगीरथेन(१२) गङ्गानयनं कृतमिति विष्णुपुराणोक्तं सङ्गच्छेत ? कथं च निपतिता च सा सागरमेव प्रविष्टेति वदद्भारतं सङ्घटेत ? तस्माद् विष्णुपदीभिन्ना हैमवती भगीरथसमानीयमाना दर्पोपशमाय शिवेन जटायां निबद्धा प्रसन्नेन च तेन विसृष्टा बिन्दुसरसि निपत्य सप्तधा प्रसृता षड्भिरंशैः सागरं प्रविष्टा । अंशान्तरेण भगीरथरथानुगा सती भुवं पातालं च प्रविश्य सागरात्मजानपि पावितवतीति ज्ञेयम्। अत्रायं मामकः सङ्ग्रहः -

भूलोके यदि च त्रिविक्रमपदाङ्गुष्ठोद्भवा निम्नगा
वर्तेत स्वपितॄन् भगीरथमहीपालस्तयैवोद्धरेत् ।
तद्यत्नादनुमीयते भुवि न सेत्युर्वीशसम्पादितां
गङ्गां हैमवतीं दधार शिरसा शम्भुर्न विष्ण्वङ्घ्रिजाम् ।। १ ।।
गङ्गा विष्णुपदी शिवेन विधृतेत्युक्तिर्महाभारत-
श्रीकूर्मोक्तिविबोध्यमानगगनस्रोतस्विनीशम्बरम् ।
राजानीतमहानदीजलगतं तस्याः परं धारणाद्
योज्या विष्णुपदी निपातसमये धृत्यप्रसक्तेर्विभोः ।। २ ।। इति ।।



Scanned with CamScanner

रामायणमपि वामनपुराणमेवानुरुन्धे । तथाहि -

श्वेताङ्गी पद्मपत्राक्षी नीलकुञ्चितमूर्धजा ।
श्वेतमाल्याम्बरधरा कुटिला नाम चापरा ।।

इति वामनपुराणे उमाज्यायस्यां हिमवत्सुतायां कुटिलापदं प्रयुक्तम् ।

एते वै शैलराजस्य सुते लोकनमस्कृते ।
गङ्गा च सरितां श्रेष्ठा उमादेवी च राघव ।।

इति रामायणे वामनपुराणोक्तकुटिलापदस्थाने भाविनीं संज्ञामाश्रित्य गङ्गापदं प्रयुक्तम् ।

तस्य कन्याद्वयं राम रूपेणाप्रतिमं भुवि ।
अथ ज्येष्ठां सुराः सर्वे देवतार्थचिकीर्षया ।।
शैलेन्द्रं वरयामासुर्गङ्गां त्रिपथगां नदीम् ।
ददौ धर्मेण हिमवांस्तनयां लोकपावनीम् ।।
गङ्गामादाय तेऽगच्छन् कृतार्थेनान्तरात्मना ।।(१३)

इति रामायणमतिसौन्दर्यशालितया शिववीर्यधारणक्षमतामवगमयतीति ।

दिवाकरैश्च रुद्रैश्च वसुभिश्च तपस्विनी ।
कुटिला ब्रह्मलोकं तु नीता शशिकरप्रभा ।।

इति वामनपुराणमनुसरति । अत्र नदीरूपं प्राप्य ब्रह्मलोकस्थितेरस्पष्टत्वात् त्रिपथगारूपप्राप्तेरेव च स्पष्टत्वात् तस्यैवोत्तरतया गङ्गापदं प्रयुज्य प्रवृत्तं विश्वामित्रवचनं सर्वोपसंहारे च इमामेव भगीरथः समानीतवान् । एनामेव च शिवः शिरसा दध्रे चेति रामायणेऽप्युक्तत्वात् सर्वांशेऽपि वामनपुराणरामायणयोरैककण्ठ्यं सुव्यक्तमेवेत्याकलयन्तु सुधियः ।।

ननु नयनाग्नेः कल्पान्ते जगत्संहरणकरणत्वेन तमोलिङ्गत्वात् तामसः शिव इति चेन्न । व्रणार्तस्य दुःखकरव्रणच्छेदाय वैद्यकृतशस्त्रग्रहणस्येव संसारदुःखमनुभवतो जगतः किञ्चित्कालमहासुषुप्त्यापादनेन विश्रान्तिदानाय सकलजगत्सञ्जिहीर्षुरुद्रकृतनयनाग्निग्रहणस्य परमदयालुताज्ञापकत्वात् । उक्तमेवार्थं -

निदानज्ञस्य भिषजो रुग्णे हिंसां प्रयुञ्जतः ।
न किञ्चिदपि नैर्घृण्यं घृणैवात्र प्रयोजिका ।।
एवं संहरणं शम्भोर्दयालुत्वस्य बोधकम् ।



Scanned with CamScanner

इति शिवपुराणमप्याह । न च तावता तामसत्वमनपगतमिति वाच्यम् ।

सोऽसृजद्दक्षिणादङ्गाद्ब्रह्माणं लोकसम्भवम् ।
वामपार्श्वात्तथा विष्णुं लोकरक्षार्थमीश्वरः ।।
युगान्ते चैव सम्प्राप्ते रुद्रं प्रभुरथासृजत् ।

इत्यानुशासनिकपर्वणि रुद्रावतारस्य लीलाविग्रहत्वाभिधानेन तामसत्वस्य औपाधिकत्वात्। न च तामसत्वं स्वाभाविकमेवास्तु शिवस्येति वाच्यम् । शिवस्य तामसत्वं विष्णोः सात्विकत्वं(१४) च कार्यकरणोपाधिकं न स्वाभाविकमिति अप्पय्यदीक्षितैः प्रतिपादनात् । उक्तार्थस्य -

यस्य साक्षाद्भवेत्सत्वं शरीरं स्यात्तमोगुणः ।
संहाराय त्रिमूर्तीनां स रुद्रः स्यान्न चापरः ।।
तथा यस्य तमः साक्षाच्छरीरं सत्त्वतागुणः ।
पालनाय त्रिमूर्तीनां स विष्णुः स्यान्न चापरः ।।

इति स्कन्दगतसूतसंहितायाम् ।

सदा सद्भावरूपाय प्रलये तामसात्मने ।
विशुद्धज्ञानतत्त्वाय तुभ्यं रुद्रात्मने नमः ।।

इति कूर्मपुराणे हिङ्गुलोपाख्याने चाभिधानाच्च ।।

ननु - मूर्तित्रयातीतस्य मूर्तित्रयजन्मादिनिदानस्य परशिववस्तुनोऽप्रसिद्धिरिति चेन्न, तादृशवस्तुनः श्रुतिपुराणप्रसिद्धत्वात् । तथा हि - अथर्वशिखायां - 'ब्रह्मविष्णुरुद्रेन्द्राः सम्प्रसूयन्ते' इत्युपक्रम्य 'कारणं तु ध्येयः सर्वैश्वर्यसम्पन्नः शिव एको ध्येयः शिवङ्करः सर्वमन्यत्परित्यज्य' इत्युपसंहृतम्। आनुशासनिके पर्वणि -

स एष भगवानीशः सर्वतत्त्वादिरव्ययः ।
सर्वतत्त्वविधानज्ञः प्रधानपुरुषेश्वरः ।।
सोऽसृजद्दक्षिणादङ्गाद्ब्रह्माणं लोकसम्भवम् ।
वामपार्श्वात्तथा विष्णुं लोकरक्षार्थमीश्वरः ।।
युगान्ते चैव संप्राप्ते रुद्रं प्रभुरथासृजत् । इति ।

शिवपुराणे वायुसंहितायां -

त्रिमूर्तिकारणं देवो न कस्माज्जायते शिवः ।



Scanned with CamScanner

त्रयस्ते कारणात्मानो जाताः साक्षान्महेश्वरात् ।।
चराचरस्य विश्वस्य सृष्टिस्थित्यन्तहेतवः ।
पित्रा नियमिताः पूर्वं त्रयोऽपि त्रिषु कर्मसु ।
ब्रह्मा सर्गे हरिस्त्राणे रुद्रः संहरणे पुनः ।
तथाप्यन्योन्यमात्सर्यादन्योन्यातिशयार्थिनः ।।
तपसा तोषयित्वा तं पितरं परमेश्वरम् ।
ब्रह्मनारायणौ पूर्वं रुद्रः (१५)कल्पान्तरेऽसृजत् ।।
कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णू जगन्मयः ।
विष्णुश्च भगवान् रुद्रं ब्रह्माणमसृजत्पुनः ।।
नारायणं पुनर्ब्रह्मा ब्रह्माणं च पुनर्भवः ।
एवं कल्पेषु कल्पेषु ब्रह्मविष्णुमहेश्वराः ।।
परस्परस्माज्जायन्ते परस्परजयैषिणः ।
तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः ।।
प्रभावः कथ्यते तेषां विद्वांस्तत्र न मुह्यति ।
अयं परस्त्वयं नेति संरम्भाभिनिवेशिनः ।।
यातुधाना भवन्त्येव पिशाचाश्च न संशयः । इति ।

कूर्मपुराणेऽपि -

शक्तयो ब्रह्मविष्ण्वीशा भुक्तिमुक्तिफलप्रदाः ।
सर्वेश्वराः सर्ववन्द्याः शाश्वतानन्दभोगिनः ।।
अन्याश्च शक्तयो दिव्याः सन्ति तत्र सहस्रशः ।
इज्यन्ते विविधैर्यज्ञैः शक्रादित्यादयोऽमराः ।।
सर्वासामेव शक्तीनां ब्रह्मविष्णुशिवात्मकाः ।
प्रधानाः संस्मृताः देवाः शक्तयस्तु परात्मनः ।।
आभ्यः परस्माद्भगवान् परमात्मा सनातनः ।
गीयते सर्वशक्त्यात्मा शूलपाणिर्महेश्वरः ।।
इमाश्च शक्तयस्तस्माच्छूलपाणेः समुद्गताः ।



Scanned with CamScanner

शिवोऽयं सर्वशक्त्यात्मा न कस्माज्जायते विभुः ।। इति ।

पराशरपुराणेऽपि-

देवताभ्यः समस्ताभ्यो ब्रह्मा स्रष्टा परः स्मृतः ।
ब्रह्मणश्च महाविष्णुर्वरिष्ठः सर्वपालकः ।।
विष्णोरपि वरः साक्षाद्रुद्रः संहारकारकः ।
सर्वेषामपि देवानां वरिष्ठः परमः शिवः ।। इति ।

भागवतेऽष्टमस्कन्धे गुणविशेषोपाधिकब्रह्मविष्णुरुद्रभेदरहितं तत्समष्टिरूपं परशिवात्मकं वस्त्वभिहितम् -

न ते गिरित्राखिललोकमालविरिञ्चिवैकुण्ठसुरेन्द्रगम्यम् ।
ज्योतिः परं यत्र रजस्तमश्च सत्त्वं न यद्ब्रह्म निरस्तभेदम् ।। इति ।

एतेन शिवाद् भिन्नो नारायण इत्युक्तिः केषाञ्चित् परास्ता । नारायणस्य समुदाहृतप्रमाणजालेन शिवांशत्वावगमात् । ब्रह्मविष्णुरुद्राणाम् अभेदस्य स्फुटतरं पुराणेषु निरूपणाच्च । तथाहि -

सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते ।
स्थित्यादयो हरिविरिञ्चिहरेति सञ्ज्ञा ...

इति (१६) भागवते प्रथमस्कन्धे द्वितीयाध्याये उक्तम् । चतुर्थस्कन्धे सप्तमाध्यायेऽपि -

अहं ब्रह्मा च रुद्रश्च जगतः कारणं परम् ।
आत्मेश्वर उपद्रष्टा स्वयंदृगविशेषणः ।।

इति निरूपितम् । लैङ्गे -

मत्तः परतरं किञ्चिन्नान्यदस्ति न संशयः ।
ब्रह्मा सर्गे हरिस्त्राणे रुद्रः संहरणेऽप्यहम् ।। इति ।

हरिवंशे एकनवतितमाध्याये -

यो वै विष्णुः स वै रुद्रो यो रुद्रः स पितामहः ।
एकमूर्तिस्त्रयो देवा ब्रह्मविष्णुमहेश्वराः ।। इति ।

सनत्कुमारसंहितायां सह्याद्रिखण्डे द्वात्रिंशाध्याये -

अहमेव त्रिधा लोके ब्रह्मविष्णुशिवाख्यया ।



Scanned with CamScanner

अबुधानां सुरश्रेष्ठ मूर्तिभेदो न संशयः ।।
ब्रह्माविष्णुशिवश्चेति सिद्धेः परमसाधनम् ।
अहमेव जगत्सर्वं नान्योऽस्ति मनुते यदा ।।
तदा स सिद्धः पुरुषः परमात्मा स उच्यते ।
स एव विष्णुर्ब्रह्मा च शिवः साक्षात् स एव हि ।। इति ।

तत्रैव षट्त्रिंशाध्याये -

स्रष्टा चतुर्मुखो भूत्वा पालने विष्णुरूपवान् ।
रुद्रो भूत्वाथ संहारे त्रिरूपी परमेश्वरः ।।
सञ्ज्ञायां भेदमिच्छन्ति न मूर्तिभेद उच्यते ।
ब्रह्मविष्णुशिवाख्या हि सञ्ज्ञा मम न संशयः ।। इति ।

वामने द्वात्रिंशाध्याये -

ततस्तदद्भुततमं दृष्ट्वा शैवादयो गणाः ।
अथाजानन्नभेदेन ब्रह्मविष्ण्वीशभास्करम् ।। इति ।

बृहन्नारदीये द्वितीयाध्याये -

ब्रह्मेशविष्ण्वाख्यशरीरभेदैर्विश्वं सृजत्यत्ति च पाति यश्च ।
तमादिदेवं पुरुषं परेशमाधाय चेतस्युपयान्ति मुक्तिम् ।।
हरिं हरं विधातारं यः पश्यत्येकरूपिणम् ।
स याति परमानन्दं शास्त्राणामेष निश्चयः ।। इति ।

तत्रैवैकोनत्रिंशाध्याये -

निर्गुणोऽपि परानन्दो गुणवानिव भाति यः ।
ब्रह्मविष्णुशिवाख्याभिर्भेदवानिव लक्ष्यते ।। इति ।

कूर्मपुराणे दशमाध्याये -

त्रिधा भिन्नोऽस्म्यहं(१७) ब्रह्म ब्रह्मविष्णुशिवाख्यया ।
सर्गरक्षालयगुणैर्निष्कलः परमेश्वरः ।। इति ।

तत्रैव षट्सप्ततितमाध्याये -

ब्रह्मविष्णुशिवा ब्रह्मंत्सर्गस्थित्यन्तहेतवः ।



Scanned with CamScanner
Scanned with CamScanner

विभज्यात्मानमेकोऽपि स्वेच्छया शङ्करः स्थितः ।। इति ।

वाराहे चतुःपञ्चाशाध्याये -

यो विष्णुः स स्वयं ब्रह्मा यो ब्रह्मा सोऽहमेव च ।
वेदत्रयं च यज्ञाश्च पण्डितेष्वेष निश्चयः ।। इति ।

भारते मोक्षधर्मे नारायणीये षष्ट्युत्तरद्विशततमाध्याये कृष्णवचनम् -

यस्तं वेत्ति स मां वेत्ति योऽनु तं स हि मामनु ।
रुद्रो नारायणश्चेति तत्त्वमेकं त्रिधा कृतम् ।। इति ।

एतत्सर्वमभिप्रेत्याभियुक्तैरुक्तम् -

उभयोरेका प्रकृतिः प्रत्ययभेदाच्च भिन्नवद्भाति ।
कलयति कश्चन मूर्खो हरिहरभेदं विना शास्त्रम् ।। इति ।

श्रुतिरपि भेदवादिनामनर्थमावेदयति - 'यदा ह्येवैष ... उदरमन्तरं कुरुते, अथ तस्य भयं भवति(तै.उ.) इति । भेदवादिनां नरकादिप्राप्तिरपि दृश्यते । तथा हि शिवपुराणे -

तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः ।
तानि तानि प्रणीतानि विद्वांस्तत्र न मुह्यति ।।
अयं परस्त्वयं नेति संरम्भाभिनिवेशिनः ।
यातुधाना भवन्त्येव पिशाचाश्च न संशयः ।। इति ।

कर्मविपाके व्यासः -

यो ब्रह्मविष्णुरुद्राणां भेदमुत्तमभावतः ।
साधयेदुदरव्याधियुक्तो भवति मानवः ।। इति ।

बृहन्नारदीये षष्ठाध्याये -

हरिरूपधरं लिङ्गं लिङ्गरूपधरो हरिः ।
ईषदप्यन्तरं नास्ति भेदकृत्पापमश्नुते ।।
अनादिनिधने देवे हरिशङ्करसंज्ञिते ।
अज्ञानसागरे मग्ना भेदं कुर्वन्ति पापिनः ।।
हरिशङ्करयोर्मध्ये ब्रह्मणश्चापि यो नरः ।
भेदकृन्नरकं भुङ्क्ते यावच्चन्द्रदिवाकरम् ।। इति ।



Scanned with CamScanner

तत्रैव -

शिव एव हरिः साक्षाद्धरिरेव शिवः स्वयम् ।
तयोरन्तरकृद्याति नरकान् कोटिकोटिशः ।। इति ।

कूर्मपुराणे षोडशाध्याये -

मन्यन्ते ये जगद्योनिं विभिन्नं विष्णुमीश्वरम् ।(१८)
मोहादवेदनिष्ठत्वात्ते यान्ति नरकं नराः ।। इति ।

वराहे चतुःपञ्चाशाध्याये -

यो भेदं कुरुतेऽस्माकं त्रयाणां सुरसत्तम ।
स पापकारी दुष्टात्मा दुर्गतेर्गतिमाप्नुयात् ।।
मां विष्णोर्व्यतिरिक्तं ये ब्रह्माणं च द्विजोत्तमाः ।
भजन्ते पापकर्माणस्ते यान्ति नरकं नराः ।। इति ।

तत्रैव षट्षष्टितमाध्याये -

अहं विष्णुस्तथा वेदा ब्रह्मा कर्मणि चाच्युतः ।
एतत्त्रयं त्वेकमेव न पृथग् भावयेत् सुधीः ।। इति ।

विष्णुधर्मोत्तरे -

विष्णोरन्यं तु पश्यन्ति ये मां ब्रह्माणमेव च ।
कुतर्कमतयो मूढाः पच्यन्ते नरकेष्वथ ।। इति ।

स्कान्दे सनत्कुमारसंहितायां सह्याद्रिखण्डे द्वात्रिंशाध्याये -

शिवः प्रधानो भूतानां न ब्रह्मा न च केशवः ।
इति ये वै प्रपश्यन्ति न ते ज्ञानस्य गोचराः ।।
मन्निन्दया ये यजन्ति विष्णुं त्रिभुवनेश्वरम् ।
न ते मुक्तिं गमिष्यन्ति प्राप्नुवन्त्येव यातनाः ।।
अवज्ञयाऽऽवयोः पुत्र ब्रह्माणं ये यजन्ति च ।
न ते ज्ञानस्य विषये वर्तन्ते सुचिरं सुत ।। इति ।

तत्रैव चतुस्त्रिंशाध्याये -

आवयोर्भेदकृन्मर्त्यः सदा नरकभाग् भवेत् ।



Scanned with CamScanner

अवमत्य हृषीकेशं मां यजन् मां विनिन्द्य च ।। इति ।

तत्रैव -

एवं त्रिधा हि विप्रर्षे ब्रह्मविष्णुमहेश्वरान् ।
पक्षपाताद् भजन्ते तात्र ते मोक्षस्य गामिनः ।।
भेदबुद्ध्या प्रवर्तन्ते यावत्तात न संशयः ।
संसारघोरनरकं तावत्ते विभ्रमन्ति हि ।।
विष्णुः श्रेष्ठः शिवश्चेति ये वदन्ति नराधमाः ।
तेषां वृथा श्रमस्तात पापिष्ठास्ते न संशयः ।। इति ।

यज्ञवैभवखण्डे ब्रह्मगीतायां द्वितीयाध्याये -

ब्रह्माणं केशवं रुद्रं भेदवादेन मोहिताः ।
पश्यन्त्येकं न जानन्ति पाषण्डोपहता इव ।। इति ।

भविष्ये चतुस्त्रिंशाध्याये -

ये च मूढा दुरात्मानो भिन्नं पश्यन्ति (१९) मां हरेः ।
ब्रह्माणं च तथा तेषां ब्रह्महत्यासमं त्वघम् ।। इति ।

एतेन शिवान्नारायणोऽधिक इति केषाञ्चिदुक्तिः परास्ता । अभेदस्य व्यक्तत्वेन न्यूनाधिकभावनाया अयुक्तत्वात् । तुष्यतु दुर्जन इति न्यायेनापि नारायणस्याधिक्यं न वदितुं शक्यते ।

खद्योतो यदि चण्डभानुसदृशस्तुल्यो हरिः शम्भुना
किम्पाको यदि चन्दनेन सदृशस्तुल्योऽहमीशेन तु ।
अज्ञानं यदि वेदनेन सदृशं देवेन तुल्या जनाः
किं वक्ष्ये सुरपुङ्गवा अहमहो मोहस्य दुश्चेष्टितम् ।।

इति स्कन्दगतब्रह्मगीतावचनेन विष्णुसाम्यस्यैव निषेधे आधिक्यनिषेधस्य कैमुतिकन्यायसिद्धत्वात्।

भेदे शिवाधिककथैव न चान्यवार्ता
तच्छोधने बलिनि शैवनये जयश्रीः ।

इति बोधायनवचनेन कण्ठतः शिवाधिक्यस्य प्रतिपादनाच्च । लक्षत्रयपरिमितै र्दशभिः पुराणैः शिवमाहात्म्यनिरूपणाच्छिवाधिककथैवेत्युक्तं भगवता बोधायनेन इति ज्ञेयम् । अस्मिन् विषये



Scanned with CamScanner

पुराणादिषु बाहुल्येनोपलभ्यमानान्यपि वचनानि विस्तरभिया नोदाहृतानि । विस्तरस्तु शिवतत्त्वविवेकादौ द्रष्टव्यः ।

ननु एको ह वै नारायण आसीत् इत्यादिश्रुतयो विष्णोः कारणत्वमभिदधतीति चेत्, उच्यते -

सर्वकारणमीशानः साम्बः सत्यादिलक्षणः ।
न विष्णुर्न विरिञ्चिश्च न रुद्रो न पुरन्दरः ।।
श्रुतयश्च पुराणानि भारतादीनि सत्तम ।
शिवमेव सदा साम्बं हृदि कृत्वा ब्रुवन्ति हि ।।

इत्यादिपराशरपुराणादिवचनैः श्रुतिस्मृतिपुराणादिषु देवतान्तरमधिकृत्य प्रवृत्तानां कारणवादानां परशिवविषयत्वस्यैव निर्धारिततया,

ततः परशिवाद् विष्णुः प्रादुरासीत्तमोनुदः ।

इत्युपबृंहणानुसारेण नारायण(२०) आसीत् इत्यत्र क्वचित्कल्पादौ नारायणः प्रथमं परशिवादाविर्भूव। स च तदितरं प्रपञ्चं सृष्टवानिति योज्यमिति । अत एव द्रोणपर्वणि - रात्रिकर्तव्यनित्यशिवपूजार्थं क्लृप्तः सर्वोऽप्युपहारः समागताय कृष्णायार्जुनेन समर्पित इत्यभिहितम् । तदपि कृष्णमूर्तौ शिवाविर्भावोऽस्तीति शिवार्चनबुद्ध्या समर्पितमित्यवधेयम्। न च शिवादप्युत्तमः समायात इति कृष्णाय पूजाद्रव्यमर्जुनेन समर्पितम्, न शिवार्चनबुद्ध्येति भ्रमितव्यम् । तस्यामेव निशायां जयद्रथवधार्थं विज्ञातविस्मृतपाशुपतास्त्रसन्धानप्रकारविशेष परिज्ञानाय कृष्णेन सहकृतकैलास गमनेनार्जुनेन कृष्णाय पूर्वं समर्पितः सर्वोऽप्युपहारः स्वप्ने शिवसन्निधाने दृष्ट इति । तस्मिन्नेव पर्वणि -

तं चोपहारं सततं नैशं नैत्यकमात्मनः ।
ददर्श त्र्यम्बकाभ्याशे वासुदेवे समर्पितम् ।।

इत्यभिधानेन वासुदेवे शिवांशत्वावगमात् । अत एव गीतायाम् -

आख्याहि मे को भवानुग्ररूपः

इत्यादिनार्जुनेन पृष्टः कृष्णः -

कालोऽस्मि लोकक्षयकृत्प्रवृद्धः

इत्यादिना स्वं सकलजगत्संहारक कालाग्निरुद्रमाचख्यौ । किञ्च,



Scanned with CamScanner

द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ।

इत्यर्जुनवचनमाकर्ण्य वैष्णवरूपस्यापि मूलभूतं शैवमेव रूपं प्रदर्शितं कृष्णेनेत्युक्तम् । पश्य मे योगमैश्वरम् इति गीतायाम् । किञ्च कृष्णेनार्जुनाय शिवतत्त्वमेवाभिहितं गीतायाम् इत्यवगम्यते ।

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।

भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ।। इति तत्रैवोक्तेः ।

ननु - ईश्वरशब्दो वासुदेवेऽपि शक्तः इति वासुदेव एव सर्वनियन्तेति प्रतिपादयन्त्या भगवद्गीतायाः(२१) शिवपरत्वकथमनुचितमिति चेत्, शृणु - नात्र वासुदेव ईश्वरशब्देन गृहीतुं शक्यते । शिवतत्त्वमेवार्जुनाय कृष्णः समाचख्याविति प्रतिपादयत्पुराणान्तरविरोधात् । तथा हि कृष्णस्य बहुधा कारणत्वादिकं प्रतिपादयन्त्या भगवद्गीतायाः शिवविषयत्वं कूर्मपुराणेऽभिहितम्

ज्ञानं तदैश्वरं नित्यं यथावद् विदितं त्वया ।

गच्छ गच्छ स्वकं स्थानं न शोकं कर्तुमर्हसि ।।

भजस्व परया भक्त्या शरण्यं परमं शिवम् । इति ।

कृष्णस्येश्वरज्ञानवत्त्वं कूर्मपुराणे ईश्वरगीतायामुक्तम् -

नारायणोऽपि भगवान् देवकीतनयो हरिः ।

अर्जुनाय स्वकं साक्षाद्दत्तवानिदमुत्तमम् ।। इति ।

इदमीश्वरगीतारूपमध्यात्मशास्त्रमित्यर्थः। आश्वमेधिके पर्वणि उत्तरगीतायामपि शिवतत्त्वं पृष्टवतेऽर्जुनाय तदेव कृष्ण आचख्यावित्युक्तम् -

आद्यन्तरहितं सूक्ष्मं शिवमद्वैतमव्ययम् ।

यज्ज्ञात्वा मुक्तिमानृच्छेत्तज्ज्ञानं ब्रूहि केशव ।।

भगवान् -

स्वयं सञ्चरिते देहे देही कृत्वा समाधिना ।

निष्कलं तद्विजानीयात् संसाररहितं शिवम् ।। इति ।

अत एवाजन्मं पार्थः शिवपूजायामेवासक्तो न विष्णुपूजायाम् । अत एव शिवः कृष्णाद्यपेक्षयाऽर्जुनस्याधिकतरं साहाय्यमाचरितवान् । तच्च भारत एव स्पष्टम् । तथा हि द्रोणपर्वणि - सकललोकभयङ्करपाशुपतास्त्रप्रदानेन शिवस्य पाण्डवानुग्राहकत्वमुपवर्णितम्।



Scanned with CamScanner

Scanned with CamScanner

तत्रैव पर्वणि - जयद्रथवधार्थं विज्ञातविस्मृतपाशुपतास्त्रसन्धानप्रकारविशेषपरिज्ञानाय कृतकैलासगमनयोः कृष्णार्जुनयोः शिवप्रदर्शिततद्धनुःशरसन्धानमुपवर्णितम् । पाशुपतास्त्रलाभेन सिद्धश्चार्जुनेनोत्कर्षलाभः शल्यपर्वणि युधिष्ठिरं प्रति कृष्णेन वर्णितः । द्रोणपर्वण्येव शतरुद्रीये शिवे कृतं बहुसाहाय्यादिकं प्रतिपादितम् । आश्वमेधिके पर्वणि तदेव युद्धकृतं बहुसाहाय्यादिकं युधिष्ठिरं प्रति भीमसेनेन स्मारितम् । मोक्षधर्मेऽपि कृष्णेनार्जुनं प्रति स्मारितम् । सौषुप्तिके पर्वणि युद्धसमये पाण्डवशिबिरं शिवनियुक्तेन केनचिन्महाभूतेन(२२) शिबिरद्वारसंनिहितेन संरक्षितमिति वर्णितम् । आदिपर्वण्यपि - पञ्चेन्द्रोपाख्याने पञ्चेन्द्रान्प्रति मानुषीभूय युष्माभि स्तत्रासुरावतार रूपसकलदुष्टक्षत्रियवधं कृत्वा प्रत्यागन्तव्यमिति नियोगवचनेन तस्य तदीयजयोपयोगिसर्वकार्यधूर्वहत्वमाविष्कृतम् । अन्ततः परशिवविभूति लेशभूतनारायणांश सञ्जातकृष्णरूपेण प्रत्यक्षमेवार्जुनविज यधूर्वहत्वमाविष्कृतम् इति दिक्।।

कृष्णस्य शिवांशत्वं तु -

एष योगीश्वरः शाङ्र्गी ममैवांशो न संशयः ।
सहायत्वेन भविता ममादेशात्तवानघ ।।

इत्यादित्यपुराणगतशिववचनेन ।

अहं ब्रह्मा कपिलोऽथाप्यनन्तः पुत्राः सर्वे ब्रह्मणश्चातिवीराः ।
त्वत्तः सर्वे देवदेव प्रसूतास्त्वं देवेशः कारणात्मा त्वमीड्यः ।।

इति हरिवंशगतकृष्णकृतशिवस्तोत्रेणाप्यवगम्यते । विष्णोः शिवादुत्पत्तिविषये भूयांसि प्रमाणानि सदाशिवाख्यतुरीयवस्तुनिरूपणावसरे समुदाहृतानि । अन्यान्यपि दिङ्मात्रमुदाहरामः । तथाहि ऋग्वेदे -

सोमः पवतेर्जनिता मतीनां जनिता दिवो जनिता पृथिव्या
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनिताथ विष्णोः । इति ।

न च विष्णोरिति पञ्चम्यन्तम्, ततश्च विष्णोः सकाशाज्जनिता जातः सोमः पवत्यादीनां जनिता स्रष्टा इत्यर्थः किं न स्यादिति वाच्यम्। षष्ठ्यन्तप्रायपठितविष्णोरित्यस्यापि षष्ठ्यन्त त्वावगमात् । श्रुत्यर्थस्योपबृंहणानुसारेण निर्णेतव्यत्वाच्च । तथा हि उपबृंहके आदित्यपुराणे -

उमया सहितो देवः सोम इत्युच्यते बुधैः ।
स एव कारणं नान्यो विष्णोरपि च वै श्रुतिः ।।



Scanned with CamScanner

Scanned with CamScanner

इत्युक्तम् । शान्तिपर्वणि -

ईश्वरश्चेतनः कर्ता पुरुषः कारणं शिवः ।
विष्णुर्ब्रह्मा शशी रुद्रः शक्रः सूर्यश्च सान्वयः ।।
सृज्यते ग्रस्यते तेन तमोभूतमिदं जगत् ।
अप्रज्ञातं जगत्सर्वं तदा ह्येको महेश्वरः ।। इति ।

लैङ्गे -

मदङ्गस्वेदसम्भूतौ ब्रह्मनारायणा(वुभौ) इति ।

न केवलमयं विष्णुः शिवाज्जातः किन्तु तदाराधनलब्धसर्वशक्तिसम्पन्नोऽपि । न चात्र प्रमाणाभावः शङ्क्यः, भूयसां प्रमाणानां सत्त्वात् । तथा हि स्कान्दे सनत्कुमारसंहितायाम् (२३) -

शिवलिङ्गार्चनोद्योगी जगद्रक्षणदीक्षितः ।
महाविष्णुस्तपश्चक्रे तस्यैव सहचारिणी ।।
महालक्ष्मीस्तपस्तेपे भर्तृसेवापरायणा ।
तदा बिल्वतरुर्जातो लक्ष्मीदक्षिणहस्ततः ।।
तत्पत्रैरर्चयामास महाविष्णुश्च शङ्करम् ।
बिल्वपत्रार्चितस्तुष्टो महादेवो दयानिधिः ।।
सर्वदेवोत्तमत्त्वं च सर्वस्वातन्त्र्यमेव च ।
प्रददौ सर्वपूज्यत्वं सर्वशक्तिं च विष्णवे ।। इति ।

कूर्मपुराणेऽपि -

भस्मोद्धूलितसर्वाङ्गो रुद्राध्ययनतत्परः ।
आराधयन् हरिः शम्भुं लेभे पाशुपतं महत् ।। इति ।

अनुशासनिके पर्वणि -

देवदेवस्त्वचिन्त्यात्मा अमेयो विष्णुरव्ययः ।
सर्वरूपं भवं ज्ञात्वा लिङ्गेऽर्चयति तं प्रभुम् ।। इति ।

द्रोणपर्वणि -

मत्प्रसादान्मनुष्येषु देवगन्धर्वयोनिषु ।
अप्रमेयबलो लोके नारायण भविष्यसि ।। इत्युपक्रम्य,



Scanned with CamScanner

एवमादीन् वरान् लब्ध्वा प्रसादात्परमेशितुः ।
स एव देवश्चरति मायया मोहयन् जगत् ।। इत्युक्तम् ।

आदिपर्वणि -

तत्र विष्णुः प्रसादार्थं रुद्रमाराधयन् पुरा ।
वरांस्तु सुबहून् लेभे सर्वदेवैः सुदुर्लभान् ।। इति ।

पद्मपुराणेऽपि -

ब्रह्मणः सृष्टिकर्तृत्वं विष्णोर्दानवमर्दनम् ।
स्वर्गाधिपत्यमिन्द्रस्य शिवपूजाविधेः फलम् ।। इति ।

सौरपुराणेऽपि लक्ष्मीं प्रति विष्णूक्तिः -

स्वामी मदीयः श्रीकण्ठस्तस्य दासोऽस्मि सर्वदा । इति ।

शिवस्य विष्ण्वाद्युपास्यत्वं च निरतिशयज्ञानप्रदत्वादेव । ज्ञानप्रदत्वं च शिवपुराणेऽभिहितम्-

प्रतिसर्गं प्रसूतानां ब्रह्मणां शास्त्रविस्तरम् ।
उपदेष्टा स एवादौ कालावच्छेदवर्तिनाम् ।।
कालावच्छेदयुक्तानां गुरूणामप्यसौ गुरुः ।
सर्वेषामेव देवेशः कालावच्छेदवर्जितः ।। इति ।

श्रुतिरपि -

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । इति ।

पतञ्जलिरपि योगशास्त्रे - क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः(यो.द.पा.१.२८) इति प्रस्तुत्य तस्य विद्योपदेष्टृत्वमेव वदन् स सर्वेषामपि गुरुः कालेनानवच्छेदादिति सूत्रयामास ।।

एतेन शिवनिन्दां कुर्वन्तः परास्ताः, समुदाहृतवचनजालेन तस्य सर्वदेवोत्तमत्वनिर्धारणात्। उदाहरिष्यमाणवचनजालेन तन्निन्दायां दोषश्रवणाच्च । (२४) तथा हि कौर्मे -

यो मामेवं विजानाति बीजिनं पितरं तथा ।
स धीरः सर्वलोकेषु न मोहमधिगच्छति ।।
रुद्रपिण्डोद्भवो विप्रः सर्वलोकेश्वरं हि माम् ।
मोहान्नैव विजानाति तातं वेश्यासुतो यथा ।। इति ।



Scanned with CamScanner

Scanned with CamScanner

तत्रैव -

यः सर्वभूतविनुतं विश्वेशं तु विनिन्दति ।
न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि ।। इति ।

मानवोपपुराणे -

रुद्रपिण्डसमुद्भूतं जगदेतच्चराचरम् ।
पितरं त्वां न जानन्ति तातं वेश्यासुतो यथा ।। इति ।

पराशरोपपुराणे -

अन्तर्नेच्छन्ति ये रुद्रं भवानीसहितं विभुम् ।
पुरीषमेव गृह्णन्ति जिह्वया ते न संशयः ।। इति ।

पाद्मे -

निरयं ते गमिष्यन्ति ये द्विषन्ति महेश्वरम् । इति ।

सौरपुराणेऽपि -

वेदवेदाङ्गवेत्तॄणां सहस्राणां द्विजन्मनाम् ।
हननान्मुच्यते जीवो न तु श्रीशिवहेलनात् ।।
गुर्वङ्गनागमनकृत् सदा मद्यनिषेवकः ।
ब्राह्मणस्वर्णहर्ता च कदाचिन्मुच्यते जनः ।।
स्त्रीगोघ्नो नृपतिघ्नश्च तथा विश्वासघातकः ।
कृतघ्नो नास्तिको लुब्धः कदाचिन्मुच्यते जनः ।।
न तु श्रीरुद्रसामान्यदर्शी मुच्येत बन्धनात् ।
विरिञ्चिविष्णुशक्रेभ्यः सर्वोत्कृष्टं न जानते ।।
विष्णुना यदि चातुल्यं मुच्यन्ते नैव जन्तवः । इति ।

इत्थं च सर्वस्यापि रुद्रपिण्डोद्भूतत्वेन शैवमेवेदं जगदिति सिद्धम् ।

एतेन मोहतो मतान्तरालम्बनं पुण्ड्रान्तरधारणं च कुर्वन्तः परास्ताः । मतान्तराद्यवलम्बे दोषश्रवणात् । तथा हि - स्कान्दे केदारखण्डे कलियुगीयधर्मनिरूपणावसरे गरुडं प्रति भगवानुवाच-

अन्तश्छिद्राणि पुण्ड्राणि वेणुपत्राकृतीनि च ।



Scanned with CamScanner

शृङ्गाकृतीनि चाप्यन्ये धरिष्यन्ति द्विजाधमाः।।
विष्णुपाषण्डनिरता निन्दिष्यन्ति शिवं तथा ।
भविष्यन्ति च पापिष्ठा ब्रह्मयोनिषु राक्षसाः ।।
घृतकोशातकीतुल्यं तत्त्ववादमुपाश्रिताः ।
शाखान्तरोक्तं पुण्ड्रं च समयाचारमेव च ।।
पूर्वैराचरितं कुर्यादन्यथा पतितो भवेत् ।
इत्यादि मम वाक्यानि तृणीकृत्य द्विजाधमाः ।।
कामक्रोधवशा भूत्वा भविष्यन्त्यङ्किताः कलौ । इति ।

कौर्मे -

स्वमतं स्वकुलं दैवं त्यक्त्वान्यमतलोलुपाः ।
द्विजाः सर्वे भविष्यन्ति चक्रिणो हीनजातिवत् ।।
हित्वा वेदोक्तमाचारं चक्रलिङ्गा(२५)ङ्किताास्तथा ।
कलौ पाषण्डमार्गस्थाः पतिष्यन्ति द्विजातयः ।
पुण्ड्रान्तरं धारिष्यन्ति सेवन्ते देशिकान्तरम् ।
गुणदोषौ न जानन्ति मोहिता बुद्धिवर्जिताः ।।
हन्ताहं किमु वक्ष्यामि कलेर्माहात्म्यमद्भुतम् ।
ज्ञात्वापि दुष्टमाचार्यमतं सेवन्ति सर्वदा ।। इति ।

वामनपुराणेऽपि-

वेदात्स्वधर्माच्चान्यत्र विशेषं यस्तु पश्यति ।
उत्पत्तौ तस्य साङ्कर्यं विद्यते न हि संशयः ।। इति ।

गोमिलस्मृतौ -

अवश्यं पितुराचारं पुत्रस्तमनुवर्तयेत् ।
शिखां शाखां च पुण्ड्रं च अन्यथा पतितो भवेत् ।। इति ।

पराशरोपपुराणेऽपि-

स्वपूर्वैः सर्वपुरुषैः पित्रादिभिरनुष्ठितम् ।
धर्मं देवं गुरुं पुण्ड्रं कदाचिदपि न त्यजेत् ।।



Scanned with CamScanner

यो मोहात्स्वं परित्यज्य परधर्मादिकं नरः ।
अङ्गीकरोति लोकेऽस्मिन् जारपुत्रो न संशयः ।।
पितुरेव हि ते जाताः पितृमार्गानुवर्तिनः ।
अन्यजाता हि ते सर्वे तद्विरुद्धमते स्थिताः ।। इति ।

पितुर्दुष्टत्वे समाश्रयणीयं स्कान्दमाह -

धर्मं पित्रादिभिः पूर्वैः सेवितं न परित्यजेत् ।
पिता यदि तु दुष्टः स्यान्मार्गं पैतामहं श्रयेत् ।। इति ।

एवं शिव एवोपास्यस्तन्मतमेवाश्रयणीयमिति सिद्धमित्यलं पल्लवितेन ।। १ ।।

मूलम् -

**जीवात्मनोरैक्यसमर्थनेन**
**प्रजाश्रितां व्यच्छिनदज्ञतां यः ।।**
**स शङ्करात्माऽवतु मामजस्त्रं**
**श्रीशङ्कराचार्यवरो यतीन्द्रः ।। २ ।।**

व्याख्या -

कृतिनायकमाचार्यं प्रार्थयति जीवात्मनोरिति। यः शङ्कर इत्याचार्यः। जीवात्मनोर्जीवब्रह्मणोः ऐक्यसमर्थनेन तत्त्वमस्याद्युपनिषद्वाग्भिः जीवो ब्रह्माभिन्न इत्यभेदसाधनेनेत्यर्थः। प्रजाश्रितां जनवर्तिनीम् अज्ञतां जीवो ब्रह्मभिन्न इति मौढ्यं, व्यच्छिनत् - चिच्छेद । शङ्करात्मा - शिवावतारः, यतीन्द्रः यतिश्रेष्ठः, सः शङ्कर इत्याचार्यवरः, अजस्त्रं -निरन्तरं, मामवतु - रक्षत्विति प्रार्थनायां लोट् ।।

ननु कपिलकणादादिपरमर्षिप्रतिष्ठिते च द्वैते सति भासमाने कथमनेन शङ्कराचार्येण प्रतिष्ठितं जीवब्रह्मैक्यापरपर्यायम् अखण्डार्थत्वं परमार्थः स्यात् इति चेत् (२६) अत्रोच्यते - यो ह्यर्थज्ञः सः परमार्थं शक्नुयाद्वक्तुम् । अर्थश्च सदाशिवस्वरूप इति विज्ञायते -

शब्दस्वरूपमखिलं धत्ते शर्वस्य वल्लभा ।
अर्थस्वरूपमखिलं धत्ते मुग्धेन्दुशेखरः ।।

इति स्कान्दगतवायुसंहितावचनेन । सोऽयमर्थस्वरूपः प्रत्यगात्मा सदाशिवो दुर्विज्ञेयः इति हि प्रसिद्धमथर्वशिखादौ । येन ते कपिलादयः परमार्थं शक्नुयुर्वेदितुम् । अत एव



Scanned with CamScanner

सर्वज्ञसर्वशक्तिसमन्वितमीश्वरं चेतनमन्तरेणाचेतनं प्रधानं तादृशांश्चाणून् पुरस्कृत्य तेषां विचित्रतरजगत्कारणत्वमभ्युपगच्छन्ति कपिलादयः । येन वा तत्समर्थितं द्वैतं परमार्थः स्यात् । तत्प्रतिष्ठिते एव द्वैते जगतोऽभिनिवेशः । अविद्यापरवशत्वात् । अयं तु न तथाभूतः शङ्कराचार्यः। तस्य सर्वार्थस्वरूपभूतशिवावतारत्वात् । एतदीयशिवावतारत्वविषयकश्रुतिपुराणादिप्रमाणान्यग्रिम श्लोकव्याख्यायामुदाहरिष्यामः। अर्थस्वरूपस्यार्थज्ञत्वमस्ति न वेति विप्रतिपत्तिस्तु दूरापास्तैव । सर्वस्यापि स्वविषयकज्ञानस्याक्षतेः। अतस्तद्वर्णितं तत्त्वमस्यादीनामखण्डार्थबोधकत्वं युक्तमेवेति।

सर्वमेतदभिप्रेत्यैवावोचन्मूलकारः शङ्करात्मेति भावगर्भविशेषणम् । अत एवात्रालङ्कारः परिकरः । अलङ्कारः परिकरः साभिप्राये विशेषणे इति लक्षणात्। ग्रन्थेऽस्मिन् इन्द्रवज्रोपेन्द्रवज्रा लक्षणलक्षितत्वात् प्रायो वृत्तमुपजातिः,

अनन्तरोदीरितलक्ष्मभाजः पादा यदीया उपजातयस्ताः

इति लक्षणात् ।।

जीवब्रह्मैक्यसमर्थनं च श्रीशङ्करभगवत्पादप्रणीतशारीरकसूत्रभाष्यादौ सुव्यक्तमेव। पूर्वाचार्यपरिपाटीमनुसृत्य सङ्क्षेपतो महावाक्यार्थं विवक्षुणा मया सामशाखीयच्छान्दोग्योपनिषद् गततत्त्वमसीति महावाक्यार्थो विचार्यते - शाब्दबोधापरपर्यायवाक्यार्थज्ञानस्य वाक्यघटितपदार्थ ज्ञानोत्तरभावित्वनियमात् प्रथमं तावत्पदार्थः शोधनीयः । तत्र तच्छब्दस्य पूर्वप्रक्रान्ते परोक्षार्थे शक्तत्वात् सर्वज्ञत्वादिधर्मकं जगत्कारणत्वेन प्रक्रान्तं परोक्षमीश्वरचैतन्यं तच्छब्दस्य वाच्योऽर्थः। अपरोक्षे सम्बोध्यार्थे(२७) युष्मच्छब्दस्य शक्तत्वादल्पज्ञत्वादिधर्मकं सम्बोध्यत्वेन विवक्षितमपरोक्षं जीवचैतन्यं त्वम्पदवाच्योऽर्थः । समानविभक्तिकपदोपस्थापितत्वादनयोस्तत्त्वम्पदार्थयोः सामानाधिकरण्यं वाच्यम् । जीवेश्वरयोरभेदस्तु तेजस्तिमिरयोरिव विरुद्धत्वान्न सम्भवतीति शक्यार्थबाधे उपस्थिते लक्षणावृत्त्या पदार्थं लक्षयित्वा वाक्यार्थो बोद्धव्य इति शास्त्रसमयः । पदशक्यार्थमादायान्वयानुपपत्तेस्तात्पर्यानुपपत्तेर्वा लक्षणाबीजत्वात् । सा च लक्षणा त्रिविधा - जहती, अजहती, जहदजहती चेति । तत्र पदस्य शक्यार्थत्यागपूर्वकं तत्सम्बद्धान्यार्थे वृत्तिर्जहल्लक्षणा। पदस्य स्वशक्यार्थसंवलितान्यार्थे वृत्तिरजहल्लक्षणा । पदस्य स्वशक्यार्थगतविरुद्धांशपरित्यागपूर्वकम् अविरुद्धाकारांशे वृत्तिर्जहदजहल्लक्षणा । इमामेव भागत्यागलक्षणां वदन्ति शास्त्रज्ञाः । तत्र गङ्गायां घोष इत्यादौ गङ्गापदशक्यस्य प्रवाहरूपार्थस्य घोषाधिकरणत्वासम्भवादशेषं शक्यार्थं परित्यज्य तत्सम्बद्धं तीरं लक्षयन्ती या जहल्लक्षणा



Scanned with CamScanner

मायाविद्योपाधिविशिष्टेश्वरजीवचैतन्यरूपशक्यार्थपरित्यागे तत्सम्बन्धिनः कस्यापि लक्षणीयार्थस्याप्रसिद्ध्या प्रकृतवाक्यस्य शून्यपर्यवसायित्वापत्तेः । न चेष्टापत्तिरिति वाच्यम् । असिपदेन सन्मात्रवाचिना समभिव्याहारविरोधात् । शोणो धावतीत्यादौ शोणपदशक्यस्य गुणविशेषरूपार्थस्याख्यातार्थान्वयासम्भवेन शक्यार्थे गुणमपरित्यज्य धावनक्रियाकर्तृत्वयोग्यं शोणगुणविशिष्टं वस्तु लक्षयन्ती या अजहल्लक्षणा । साप्यत्र न घटते। जडातिरिक्तलक्ष्यार्थस्याभावात्। सोऽयं देवदत्तः इत्यादौ तदिदम्पदशक्ययोः परोक्षापरोक्ष देशकालविशिष्टयोरभेदान्वयासम्भवेन तदेतद्देशकालवैशिष्ट्यरूपविरुद्धांशं परित्यज्याविरुद्ध मखण्डं देवदत्तस्वरूपमात्रं लक्षयन्ती या जहदजहल्लक्षणा । सैवात्र भवितुमर्हति। शक्त्युपस्थापितयोर्जीवचैतन्येश्वरचैतन्ययोरभेदान्वयासम्भवेन विरुद्धयोर्जीवत्वेश्वरत्वरूप विशेषणभागयोः परित्यागेनाविरुद्धचैतन्यरूपविशेष्यभागयोरेव स्वीकर्तव्यत्वात् । असिपदेन तत्त्वम्पदसामानाधिकरण्यलभ्यमखण्डार्थरूपं जीवब्रह्मैक्यं लक्ष्यते। ततश्च विगलिताशेष विकल्पमखण्डचैतन्यमिति वाच्यार्थः(२८) पर्यवसन्नः । तथोक्तं विद्यारण्यश्रीचरणैः -

एकमेवाद्वितीयं सन्नामरूपविवर्जितम् ।
सृष्टेः प्रागधुनाप्यस्य तादृक्त्वं तदितीर्यते ।।
श्रोतुर्देहेन्द्रियातीतं वस्त्वत्र त्वम्पदेरितम् ।
एकता ग्राह्यतेऽसीति तदैक्यमनुभूयताम् ।। इति ।

अत्रायं मामकस्तत्त्वमसीति श्रुत्यर्थसङ्ग्रहः । श्लो० -

तद्वाच्यो निखिलज्ञतामधिगतोऽल्पज्ञस्त्वमर्थस्तयो-
रैक्यासम्भवतो जहत्यजहतीभिन्नोभयी लक्षणा ।
तेनाभेदविरुद्धधर्मविरहाच्चैतन्ययोऽशिष्टयो-
रैक्यं सिद्धमदोऽनुवक्त्यसिपदं तत्त्वं महावाक्यगम् ।। इति।

अर्थस्याखण्डत्वं च प्रकारताविशेष्यतादिविषयशून्यत्वमिति ज्ञेयम् ।

संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम् ।
उक्ताखण्डार्थता यद्वा तत्प्रातिपदिकार्थता ।।

इत्युक्तेः । नन्वत्र विरुद्धभागत्यागपूर्वकं विशेष्यतया चैतन्योपस्थितये निरुक्तलक्षणाश्रयणमसङ्गतम्। विरुद्धधर्माक्रान्तरूपविशिष्टयोरभेदान्वयो न सम्भवतीत्यनुपपत्त्या पराहतत्वेन जीवत्वेश्वरत्वरूप



Scanned with CamScanner

वैशिष्ट्यांशस्यानन्वये एवेति विरुद्ध वैशिष्ट्यरूपभागत्यागस्याप्यर्थतः सिद्धत्वात्। विशेष्यतयाऽभेदान्वययोग्यचैतन्योपस्थितेः पदशक्त्यैव लाभाच्चेति चेत् न - अमात्ये प्रयुक्त-राजा त्वमसि इति-वाक्ये इव तत्त्वमसि इति वाक्येऽपि प्रसक्ताभेदस्योपचरितार्थत्ववारणार्थं शक्त्युपस्थापितपदार्थानां शाब्दबोधे संसर्गविधया भाने शक्तिजन्योपस्थितेर्विशेष्यांशत्वेऽपि नासौ विशेष्यांशः शुद्धः, किन्तु संसृष्ट एवेत्यापत्तौ तन्निवारणपूर्वकाखण्डचैतन्यरूपलक्ष्यार्थोपस्थित्यर्थं च प्रकृतलक्षणायाः समाश्रयणीयत्वात्। प्रकृतवाक्यादखण्डार्थबोधस्य सिद्धान्ते इष्टत्वात् । अर्थस्याखण्डत्वं च प्रकारता विशेष्यतादिविषयशून्यत्वमित्यवोचाम । प्रकृतवाक्यार्थभूतमखण्डचैतन्यं हि न पराभिमतसंसर्गवत् प्रकारतया वा भासते । किन्तु विगलिताशेषविशेषं शुद्धचैतन्यमेव । अतः शक्तिजन्यां विशेष्यतयोपस्थितिं त्यक्त्वा लक्षणाजन्यां शुद्धवस्तूपस्थितिमुरीकुर्वन्ति वेदान्तिनः। (२९) अत एवायं वाक्यार्थबोधो निर्विकल्पः सम्पद्यते । शुद्धपदार्थस्यैव वाक्यार्थत्वादिति रहस्यम् । न चैवं वाक्यार्थप्रयोगवैयर्थ्यं स्यादिति वाच्यम् । केनापि निमित्तेनास्तमितनिजयाथात्म्य ज्ञानस्य संबोध्यस्य स्वयाथात्म्यप्रत्यभिज्ञानाय त्वम्पदघटितवाक्यार्थप्रयोगस्यावश्यकत्वात्। तथाविधवाक्यार्थबोधमन्तरेण भ्रमानिवृत्तेश्च। यदाह वार्तिककृत् सुरेश्वराचार्यः -

राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते ।
यथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः ।। इति ।

विशेषस्तु महानिबन्धेभ्योऽवगन्तव्य इति दिक् ।।

अथ ऋक्शाखीयैतरेयारण्यकगत - प्रज्ञानं ब्रह्म इति - महावाक्यार्थो विचार्यते । तत्रेश्वरकर्तृकरूपादिकर्मकदर्शने साधनत्वेन प्रक्रान्तमन्तःकरणोपहितमपरोक्षजीवचैतन्यं प्रज्ञानशब्दस्य वाच्योऽर्थः । जगज्जन्मादिकारणत्वेन प्रक्रान्तं सर्वव्यापकं परोक्षमीश्वरचैतन्यं ब्रह्मशब्दस्य वाच्योऽर्थः । तत्र विरुद्धविशेषणांशयोः परित्यागेनाविरुद्धौ चैतन्यरूपविशेष्य भागावेवैकाकारेण लक्ष्येते । ततश्च यतः प्रज्ञानत्वाविशेषेण चैतन्यमेकमतो मय्यपि स्थितमिति वाक्यार्थबोधः सम्पन्नः । तदुक्तं विद्यारण्यश्रीगुरुचरणैः -

येनेक्षते शृणोतीदं जिघ्रति व्याकरोति च ।
स्वाद्वस्वादू विजानाति तत्प्रज्ञानमुदीरितम् ।
चतुर्मुखेन्द्रदेवेषु मनुष्याश्वगवादिषु ।
चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्म मय्यपि ।। इति ।



Scanned with CamScanner

अथ यजुःशाखीयबृहदारण्यकगतस्याहं ब्रह्मास्मि इति महावाक्यस्यार्थो विविच्यते - तत्र मनुष्यादिदेहगतबुद्ध्युपलक्षितसूक्ष्मशरीरसाक्षितया प्रक्रान्तमपरोक्षं जीवचैतन्यमहंशब्दार्थः। देशकालाद्यनवच्छिन्नत्वेनाप्रक्रान्तं परोक्षमीश्वरचैतन्यं ब्रह्मशब्दार्थः । तत्र विरुद्धविशेषणांशयोः परित्यागेनाविरुद्धचैतन्यभागावेवाखण्डाकारेण लक्ष्येते । अस्मीति पदेन पदद्वयसामानाधिकरण्य लभ्यं जीवब्रह्मैक्यं परामृश्यते । ततश्च यतश्चैतन्ययोरैक्यमतो ब्रह्म भवामीति वाक्यार्थबोधः(३०) पर्यवस्यति । तथोक्तमाचार्यविद्यारण्यैः -

परिपूर्णः परात्मास्मिन् देहे विद्याधिकारिणि ।
बुद्धेः साक्षितया स्थित्वा स्फुरन्नहमितीर्यते ।
स्वतः पूर्णः परात्मात्र ब्रह्मशब्देन वर्णितः ।
अस्मीत्यैक्यपरामर्शस्तेन ब्रह्म भवाम्यहम् ।। इति ।

अथाथर्वणवेदगतस्य अयमात्मा ब्रह्म इति महावाक्यस्यार्थो विचार्यते । तत्र स्वयम्प्रकाशकत्वेनापरोक्षोऽयंशब्दार्थः । अहङ्कारादिसाक्षितयाऽदृश्य आत्मशब्दार्थः । एतेनादृष्टादिवन्नित्यापरोक्षत्वम् । घटादिवत् दृश्यत्वं व्यावृत्तम्। ततश्चापरोक्षमदृश्यमान्तरं जीवचैतन्यमयमात्मेति सङ्घातस्यार्थ इति फलितम्। स्वयम्प्रकाशत्वेन सकलजगदधिष्ठानत्वेन च प्रक्रान्तं परोक्षमीश्वरचैतन्यं ब्रह्मशब्दार्थः । तत्र विरुद्धविशेषणांशपरित्यागेनाविरुद्धौ चैतन्यभागावेवैकाकारेण लक्ष्येते । यतश्च स्वप्रकाशत्वेन चैतन्ययोरैक्यमतो ब्रह्मैवात्मेति महावाक्यार्थो निष्पन्नः । तदुक्तं श्रीविद्यारण्यगुरुसार्वभौमैः -

स्वप्रकाशापरोक्षत्वमयमित्युक्तितो मतम् ।
अहङ्कारादिदेहान्तात्प्रत्यगात्मेति गीयते ।।
दृश्यमानस्य सर्वस्य जगतस्तत्त्वमीर्यते ।
ब्रह्मशब्देन तद्ब्रह्म स्वप्रकाशात्मरूपकम् । इति ।। २ ।।

मूलम् -

**स्मार्तोऽपि माध्वो धनकाङ्क्षया यो**
**नारायणो वीक्ष्य पुराणवाक्षु ।**
**श्रीशङ्करार्यस्तुतिमध्वतप्त-**
**चक्राङ्कनिन्दाः समभूदमर्षी ।। ३ ।।**



Scanned with CamScanner

व्याख्या - विमतस्य कस्यचिन्नारायणनाम्नः श्रीशङ्करभगवत्पादेष्वसूयाग्रस्तत्वं दर्शयति - स्मार्तोऽपीति । स्मार्तः प्रथममाचार्यभगवत्पादप्रतिष्ठिताद्वैतमतानुगोऽपि धनकाङ्क्षया - द्रव्याशया, माध्वः अभिनवद्वैतवादिमध्वमतावलम्बी, यः नारायणस्तन्नामा पुमान्, पुराणवाक्षु। पुराणमित्युप लक्षणम् । पुराणादिवाक्येष्वित्यर्थः । श्रीशङ्कराचार्यस्तुतिश्च मध्वतप्ताङ्कयोर्निन्दे च श्रीशङ्करार्यस्तुति - मध्वतप्ताङ्कनिन्दास्ताः वीक्ष्य दृष्ट्वा अमर्षी सामर्षः। सामर्षः सासूय इति यावत् । समभूत् (३१) बभूव । कलिमाहात्म्यादिति भावः । तथोक्तमभियुक्तैः-

निर्वीया पृथिवी निरोषधिरसा नीचा महत्त्वं गता
भूपाला निजधर्मकर्मरहिता विप्राः कुमार्गेरिताः ।
भार्या भर्तृविरोधिनी पररता पुत्राः पितृद्वेषिणो
हा! कष्टं खलु वर्तते कलियुगे सन्मार्गविध्वंसके ।। इति ।

स्कान्दे कलिमाहात्म्येऽपि -

वेदोक्तकर्महीनाश्च तान्त्रिकाचारतत्पराः ।
भविष्यन्ति कलौ विप्रा धनसङ्ग्रहणे रताः ।। इति ।

यदत्र मूलकृता नारायणः पुराणवाक्षु श्रीशङ्करार्यस्तुतिं वीक्ष्य सासूयः समभूदित्युक्तम्। तत्रेदानीं तदमर्षमूलकारणानि श्रीशङ्करभगवत्पादीयश्रीशिवावतारत्वस्य तत्प्रतिष्ठापिताद्वैतसिद्धान्तसत्यत्वस्य च निरूपकाणि श्रुतिस्मृतिपुराणाभियुक्तवाक्यरूपाणि प्रमाणान्युदाहरामः । तथा हि यजुर्वेदे चतुर्थाष्टके - नमः कपर्दिने च व्युप्तकेशाय च नमः इति। कपर्दो जटाजूटोऽस्यास्तीति कपर्दी । मुण्डितकेशो व्युप्तकेशः । पाशुपतादिरूपेण कपर्दित्वम्। यतिवेषेण मुण्डितकेशत्वम् । इति विद्यारण्यश्रीचरणभाष्यम् ।

ननु - सर्वरूपतया शिवस्तावके रुद्राध्याये व्युप्तकेशाय नमः इत्युक्त्या शङ्कराचार्य एव न गृहीतुं शक्यते इति चेत् । मैवं मंस्थाः । नमो भवाय च रुद्राय च नमः शर्वाय च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च नमः कपर्दिने च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च नमो गिरिशाय च शिपिविष्टाय च नमः इति प्रकरणपठितनाम्नां शिवपर्यायत्वेन तद्गतव्युप्तकेशपदं शङ्कराचार्यरूपेण मुण्डितकेशं शिवम् आख्याति, न यतिसामान्यम् । अन्यथा वृक्षेभ्यो हरिकेशेभ्यः इति बहुवचनान्ततया निर्दिशेदिति वक्तुं शक्यत्वात् । श्रुत्यर्थस्योपबृंहणानुसारेण निर्णेतव्यतया,



Scanned with CamScanner

Scanned with CamScanner

कल्यब्धौ मज्जमानांस्तान् दृष्ट्वानुक्रोशतोऽम्बिके ।
ममांशभूतं देवेशि कलावपि तपोधनम् ।।
केरलेषु तदा विप्रं जनयामि महेश्वरि ।
भविष्यति महादेवि शङ्कराख्योऽथ मस्करी ।।

इति स्कान्दीयशिवरहस्यगतनवमांशस्थितषोडशाध्यायवचनेन व्युप्तकेशशब्दस्य शङ्करयतिरूपशिवार्थकत्वनिर्णयाच्छङ्करावतारमन्तरेण शिवस्य मुण्डितकेशतायाः क्वाप्यनुक्तेश्च। ऋग्वेदे प्रथमाष्टके श्रूयते -

उप'ह्वये सुदुघां' धेनुमेतां सुहस्तो' गोधुगुतदो'हदेनाम् ।
श्रेष्ठं' सवं स'विता सा' विषन्नो भी'द्धो घर्मस्त'दुषु प्रवो'चम् ।।

अस्या आत्मानन्दीयभाष्यानुसार्ययमर्थः - सुदुघाम् सुष्ठु ब्रह्मामृत दोग्ध्रीम् । धेनुम् इष्टार्थदत्वेन कामधेनुस्थानीयाम् । एताम् अद्वितीयात्मपराम् उपनिषद्देवीम् । उपह्वये - उपादेयत्वेन कथयामि । ह्वेञ् स्पर्धायां शब्दे च । ननूपनिषदर्थस्य दुर्बोधत्वेन वाक्यार्थानुदयात्तासामनुपादेयत्वम् इत्याशङ्क्याह - सुहस्त इति । उत अपि । गोधुक् - गवां बादरायणादिप्रणीतोपनिषदर्थनिर्णायक सूत्रादिरूपवाचम्, धुक् - दोग्धा, व्याख्यातेति यावत् । स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले इति गोशब्दार्थेऽमरः । सुहस्तः सुखहस्तः - शङ्कर इति पारोक्ष्येण नामनिर्देशः । एनाम् अद्वितीयब्रह्मपरामुपनिषदम्, दोहत् - दुदोह व्याचख्याविति यावत् । इतिहासपुराणाद्यैर्वेदार्थमुपबृंहयेत् इति न्यायेन सूत्रादि निर्णीतमेवार्थमुपनिषदामाचख्यावित्यर्थः । दुहेर्लिङि च्छान्दसत्वात् । शबलुक् अडागमाभावौ। श्रीशङ्कराचार्ये मनुष्यमात्रतां वारयन्नाह - श्रेष्ठमिति । अभीद्धः - सर्वत्र तेजोरूपेण भासमानः स्वयम्प्रकाश इति यावत् । ञिइन्धी दीप्तौ । कर्तरि क्तः । जिघर्ति क्षरति मायासङ्गादिति घर्मः, निरस्तमायोपाधिप्रपञ्च इत्यर्थः । घृ क्षरणदीत्प्योः । घर्म इति सूत्रे शाकटायननिपातनान्मक्प्रत्ययो गुणश्च । सविता, स एव सवितास्माकं चन्द्रार्धकृतशेखरः इत्यादिना निखिलजगज्जनकत्वमभिप्रेत्य विष्णुना सवितृपदेन निर्दिष्टः । असौ सदाशिवः नः अस्मदर्थं वास्तवार्थनिरूपणेनास्मानुद्धारयितुमित्यर्थः। सवं जन्म। इषत् गतवान् । शङ्कराचार्यरूपेणोदभूदित्यर्थः । इष गतौ । छान्दसत्वाद् विकरणव्यत्ययः । अडागमाभावश्च।(३३) शिवे देवतासामान्यत्वं वारयन्नाह - तदिति । उरवधारणे । तत् - तत्पदलक्ष्यार्थभूतं ब्रह्मैव सत्, सुप्रवोचम् असन्दिग्धाविपर्यस्ततया सुष्ठु प्रकर्षेण प्रोक्तवानासम्। छान्दसत्वाद्वचेरडागमाभावः।



Scanned with CamScanner

इति ।

विष्णुधर्मोत्तरे पुष्करनाम्ना यक्षेण श्रीरामं प्रतीयमृगुक्तरीत्या व्याख्याता । तथा हि -

प्रामाणिकः श्रुत्युदितः स योऽर्थो व्यासोक्तरीत्या प्रतिपादितश्च ।

व्यासोदितं शङ्करबोधितं तद्यः शङ्करोऽसौ सविता स ईशः ।।

इति । वायुपुराणे -

व्याकुर्वन् व्याससूत्राणि श्रुतेरर्थं यमूचिवान् ।

स एवार्थः श्रुतेर्ग्राह्यः शङ्करः सविता न ना ।। इति ।

स्कान्दे बदरीमाहात्म्ये -

ततोऽहं यतिरूपेण तीर्थान्नारदसञ्ज्ञितात् ।

उद्धृत्य स्थापयिष्यामि मूर्तिं लोकहितेच्छया ।। इति ।

पुराणान्तरे बदरीमाहात्म्ये -

समुद्रतीरे विद्योतत्कले विष्णुमहेशयोः ।

अत्र नारायणं देवं त्वत्तीर्थादुद्धरिष्यते ।। इति ।

समुद्रतीरे चोलकेरलदेशे समुत्पन्नौ विष्णुमहेशयोः कले कलाभूतौ पद्मपादशङ्कराचार्यौ । शिवपुराणे कालीखण्डे वाराणसीमाहात्म्ये लगुडेशोपाख्याने नारदं प्रति सनत्कुमारेणोक्तम् -

कृते ज्ञानप्रदः सत्यस्त्रेतायां दत्त एव च ।

द्वापरे व्यासनामा तु कलौ शङ्कर ईरितः ।।

सत्यः सुमेधसो ब्रह्मा पुत्रभावमुपागतः ।

अत्रेर्दत्तः शक्तिपुत्रसुतो व्यासः प्रकीर्तितः ।।

शिवतेजःसुतः साक्षाच्छङ्करः परदैवतम् ।

मुहुर्मुहुः प्रणष्टस्य शास्त्रस्योद्धरणाय वै ।।

श्रुतिस्मृत्यर्थबोधाय पाषण्डनिधनाय च ।

अध्यात्मशास्त्रविज्ञप्त्यै लोकानुग्रहकारणात् ।।

सुराद्यभ्यर्थितो देवदेवोऽसौ भगवान् शिवः ।

अवतारांश्चकारात्र श्रुतिस्मृतिविभागकृत् ।। इति ।

कूर्मपुराणेऽपि -



Scanned with CamScanner

Scanned with CamScanner

कलौ रुद्रो महादेवो लोकानामीश्वरः परः ।
करिष्यत्यवतारं स्वं शङ्करो नीललोहितः ।।
श्रौतस्मार्तप्रतिष्ठार्थं भक्तानां हितकाम्यया ।
उपदेक्ष्यति तज्ज्ञानं भक्तानां ब्रह्मसञ्ज्ञितम् ।।
सर्ववेदान्तसारं च धर्मान् वेदनिदर्शकान् ।
एतं विप्रा निषेवन्ते संन्यासेनोपचारतः ।। (३४)
विसृज्य कलिजान् दोषान् यान्ति ते परमं पदम् ।। इति ।

सौरपुराणे -

व्याकुर्वन् व्याससूत्राणि श्रुतेरर्थं यथोचिवान् ।
स एवार्थः श्रुतेर्ग्राह्यः शङ्करः सविता न ना ।। इति ।

पुराणान्तरेऽपि -

कृते ज्ञानप्रदः सत्यस्त्रेतायां दत्त एव च ।
द्वापरे व्यासनामा तु कलौ शङ्करनामधृक् ।।
ब्रह्मा सत्यो हरिर्दत्तो व्यासो रुद्रस्तथैव च ।
शङ्करः सविता साक्षादीश्वरः परदैवतम् ।।
युगे युगे प्रणष्टस्य शास्त्रस्योद्धरणाय वै ।
श्रुतिस्मृत्यर्थबोधाय पाषण्डनिधनाय च ।।
सूत्राणि तेषु कुर्वन्ति भाष्याणि सुबहूनि च । इति ।

भविष्यपुराणे -

चतुर्भिः सह शिष्यैस्तु शङ्करोऽवतरिष्यति ।
गुरुरद्वैतविद्याया उपदेष्टा शिवस्ततः ।।
विष्णुर्ब्रह्मा वसिष्ठश्च शक्तिश्चैव पराशरः ।
व्यासः शुको गौडपादो गोविन्दश्चैव शङ्करः ।।
शङ्करस्य तु शिष्यास्तु चत्वारो लोकविश्रुताः ।
पद्मपादः सुरेशश्च तोटकाख्यस्तथैव च ।।
हस्तामलकसञ्ज्ञश्च विष्णुर्ब्रह्मा गुरुः शिखी । इति ।



Scanned with CamScanner

लिङ्गपुराणे -

कलौ रुद्रो महादेवः शङ्करो नीललोहितः ।
प्रकाशते प्रतिष्ठार्थं धर्मस्य विवृताकृतिः ।।
ये तं विप्रा निषेवन्ते येन केनापि शङ्करम् ।
कलिदोषान् विनिर्जित्य यान्ति ते परमं पदम् ।। इति ।

स्कान्दे शिवरहस्ये नवमांशे षोडशाध्याये, स्कन्द उवाच -

तदा गिरिजया पृष्टस्त्रिकालज्ञस्त्रिलोचनः ।
भविष्यच्छिवभक्तानां भक्तिं संवीक्ष्य विस्मयन् ।।
मौलिमान्दोलयन् देवो बभाषे वचनं मुने ।

ईश्वर उवाच -

शृणु त्वं मेऽभिगणपैर्मुनीशैश्च सुरैस्तथा ।।
प्रभावं शिवभक्तानां कलौ तु प्रभविष्यताम् ।
वदामि सङ्ग्रहेणैव श्रवणाद्भक्तिवर्धनम् ।।
गोपनीयं प्रयत्नेन नाख्येयं यस्य कस्यचित् ।
पापघ्नं पुण्यमायुष्यं श्रोतॄणां मङ्गलावहम् ।।
पापकर्मैकनिरतान् विरतान् धर्मकर्मसु ।
वर्णाश्रमपरिभ्रष्टान् धर्मप्रस्रवणान् जनान् ।
कल्यब्धौ मज्जमानांस्तान् दृष्ट्वानुक्रोशतोऽम्बिके ।।
ममांशभूतं देवेशि कलावपि तपोधनम् ।
केरलेषु तदा विप्रं जनयामि महेश्वरि ।। (३५)
तस्यैव चरितं तेऽद्य वक्ष्यामि शृणु शैलजे ।
कल्यादिमे महादेवि ! सहस्रत्रितयात्परम् ।।
सारस्वतास्तथा गौडा मिश्राः कर्णाञ्जनाः द्विजाः ।
आममीनाशिना देवि ! आर्यावर्तानुवासिनः ।।
औत्तरा विन्ध्यनिलया भविष्यन्ति महीतले ।
शब्दार्थज्ञानकुशलास्तर्ककर्कशबुद्धयः ।।



Scanned with CamScanner

Scanned with CamScanner

जैना बौद्धा बुद्धियुक्ता मीमांसानिरताः कलौ ।
वेदबोधितवाक्यानामन्यथैव प्ररोचकाः ।।
प्रत्यक्षवादकुशलाः शल्यभूताः कलौ शिवे ! ।
मिश्राः शास्त्रमहाशस्त्रैरद्वैतच्छेदिनोऽम्बिके ! ।।
कर्मैव फलदं श्रेयो नैवेशः फलदायकः ।
इति युक्तिपरामृष्टैर्वाक्यैरुद्बोधयन्ति च ।।
तेन घोरकुलाचाराः कर्मसारा भवन्ति च ।
तेषामुत्पाटनार्थाय सृजामीशे मदंशतः ।
भविष्यति महादेवि शङ्कराख्यो द्विजोत्तमः ।।
पिता शिवाभिधस्तस्य तृतीयेऽब्दे मरिष्यति ।
उपनीतस्ततो मात्रा वेदान् साङ्गान् गृहीष्यति ।।
अब्दावधि ततः शब्दे विहृत्य स तु तर्कजाम् ।
मतिं मीमांसमानोऽसौ कृत्वा शास्त्रेषु निश्चयम् ।।
वादिमत्तद्विपवरान् शङ्करोत्तमकेसरी ।
भिनत्त्येव तथा बुद्धान् सिद्धविद्यानपि द्रुतम् ।।
जैनान् विजित्य तरसा तथान्यान् कुमतानुगान् ।
ततो मातरमामन्त्र्य परिव्राट् स भविष्यति ।।
दण्डहस्तस्तथा कुण्डी काषायवसनोज्ज्वलः ।
ताररुद्राक्षपारीणः शिवलिङ्गार्चने प्रियः ।।
स्वशिष्यैस्तादृशैर्घुष्यन् भाष्यवाक्यानि सोऽम्बिके ।
मद्दत्तविद्यया भिक्षुर्विराजति शशाङ्कवत् ।।
परिव्राजकरूपेण मिश्रानाश्रमदूषकान् ।
सोऽद्वैतच्छेदकान् पापानुच्छिद्याक्षिप्य तर्कतः ।
स्वमतानुगतान् देवि! करिष्यति निरर्गलम् ।

सूत उवाच -

तथापि प्रत्ययस्तेषां नैवासीच्छुभदर्शने ।।



Scanned with CamScanner

मिश्राः शास्त्रार्थकुशलास्तर्ककर्कशबुद्धयः ।
तेषामुत्पाटनार्थाय तिष्ये भाष्यं करिष्यति ।।
व्यासोपदिष्टसूत्राणां द्वैताद्वैतात्मनां ततः ।
अद्वैतमेव सूत्राणां प्रमाणेन करिष्यति ।।
अविमुक्ते समासीनं व्यासं वाक्यैर्विजित्य च ।
शङ्करं स्तौति हृष्टात्मा शङ्कराख्योऽथ मस्करी ।।

शङ्कर उवाच -

सत्यं सत्यं नेह नानास्ति किञ्चि-
दीशावास्यं(३६) ब्रह्म सत्यं च बाह्ये ।
ब्रह्मैवेदं ब्रह्म पश्चात् पुरस्ता -
देको देवो न द्वितीयाय तस्थे ।।

एको देवः सर्वभूतेषु गूढो नानाकारोद्भासिभावैस्तदात्मा ।
पूर्णात्पूर्णो नामरूपैर्विहीनो विश्वातीतो विश्वनाथो महेशः ।।
भूतं भव्यं वर्तमानं त्वमीशः सामान्यं वै देशोकालादिहीनः ।
नातो मूर्तिर्वेदवेद्यस्त्वसङ्गः सङ्गीव त्वं लिङ्गसंस्थो विभासि ।।
त्वद्भासा वै सोमसूर्यानिलेन्द्रा भीषैवोदेत्येष सूर्यश्च देवः ।
त्वं वेदादौ स्वर एको महेशो वेदान्तानां सारवाक्यार्थवेद्यः ।।
ॐकाराय पुरुषस्त्वम् ऋतं च सत्यज्ञानानन्दभूमासि सोम ।
बद्धो मुक्तो नासि सङ्गो ह्यसङ्गः प्राणप्राणो मनसस्त्वं मनश्च ।।
त्वत्तो वाचो मनसा सन्निवृत्तास्तवानन्द ज्ञानिनो बद्धभावाः ।
त्वत्तो जातं भूतजातं महेश त्वया जीवत्येवमेवं विचित्रम् ।।
त्वामेवान्ते संविशत्येव विश्वं त्वां वै सर्वः स्तौति तं स्तव्यमीशम् ।
किञ्चिज्ज्ञात्वा सर्वभास्येव बुध्वा त्वामात्मानं देवदेवं महेशम् ।।

ईश्वर उवाच -

अथ शङ्करवाक्येन विश्वेशाख्यादहं तदा ।
प्रादुर्बभूव लिङ्गैः स्वैरलिङ्गोऽपि महेश्वरि ।।



Scanned with CamScanner

त्रिपुण्ड्रविलसत्फालश्चन्द्रार्धकृतशेखरः ।
नागाजिनोत्तरासङ्गो नीलकण्ठस्त्रिलोचनः ।।
वरकाकोदराधीशराजद्धारस्त्वया सह ।
तं ब्रवीमि महादेवि प्रणती यतिनां वरम् ।।
शिष्यैश्चतुर्भिश्च युतं भस्मरुद्राक्षभूषणम् ।
मदंशतस्त्वं जातोऽसि भुवि चाद्वैतसिद्धये ।।
पापमिश्राश्रितैर्मार्गैर्जनदुर्बुद्धिबोधकैः ।
भिन्नो वैदिकसंसिद्धे अद्वैते द्वैतवाक्यतः ।।
तद्भेदगिरिवज्रस्त्वं सञ्जातोऽसि मदंशतः ।
दुर्वासःशापतो भूमौ जातां वाणीं विजित्य ताम् ।।
अगस्त्यचरिते देशे तुङ्गातीरेऽतिनिर्मले ।
पुण्यक्षेत्रे द्विजवर स्थापयित्वा सुपूजय ।।
यत्रास्ते ऋष्यशृङ्गस्य महर्षेराश्रमो महान् ।
कलावपि ततोऽद्वैतमार्गः ख्यातो भविष्यति ।।
द्वात्रिंशत्परमायुस्ते ततः कैलासमावस ।
एतत्प्रतिगृहाण त्वं पञ्चलिङ्गं सुपूजय ।।
भस्मरुद्राक्षसम्पन्नः पञ्चाक्षरपरायणः ।
शतरुद्रावर्तनैश्च तारेण भसितेन च ।।
बिल्वपत्रैश्च कुसुमैर्नैवेद्यैर्विविधैरपि ।
त्रिवारं सावधानः सन् (३७) गच्छ सर्वजयाय च ।।
त्वदर्थं कैलासाचलवरसुपालीगतमहा-
समुद्यच्चन्द्राभं स्फटिकधवलं लिङ्गकुलकम् ।
समानीतं सोमोद्विमलमणिमौल्यर्चय परं
कलौ लिङ्गार्चायां भवति हि विमुक्तिः परतरा ।।
स शङ्करो मां प्रणिपत्य मस्करी यशस्करी सर्ववरेण्यमार्ये ।
सङ्गृह्य लिङ्गानि गमिष्यति द्राग् जेतुं स बौद्धार्हतमिश्रमुख्यान् ।।



Scanned with CamScanner

Scanned with CamScanner

एतत्तेऽभिहितं देवि मुख्यं मुक्तिपदावहम् ।
शाङ्करं चरितं लोके भविष्यति न संशयः ।।

स्कन्द उवाच -

तद्योगभोगवरमुक्तिसुमोक्षयोगलिङ्गार्चनात्प्राप्तजयः सकामम् ।
तान्वै विजित्य तरसाऽक्षतशास्त्रजालैर्मिश्रान्स काञ्च्यामथ सिद्धिमाप।
काञ्च्यां तपःसिद्धिमवाप्य दण्डी चण्डीशरूपो जगदाकलय्य ।
ब्रह्मैक्यविद्यां रचयन् स भाष्यं शारीरकं नाम जगाद मोदात् ।।
व्यासेन सम्भाष्य समेत्य काशीं तं मण्डनार्यं परिखण्ड्य वाणीम् ।
जेतुं शरीरान्तरमेत्य कामकलां जगाहे प्रमदावरां यः ।।
पुनः स्वकं देहमवाप्य तूर्णं पूर्णं निजं काममथाकलय्य ।
वाणीं स जित्वैव तु तां मठे स्वे श्रीशृङ्गगिर्याख्यपुरे निवेश्य ।।
कापालिकं तं क्रकचं महोग्रं कर्नाटदेशं निखिलं विजित्य ।
गोकर्णमासाद्य तमीशमीड्यं स्तुत्वा महाराष्ट्रपदं प्रपेदे ।।
तत्र स्थितान् भास्करभट्टमुख्यांस्तु नीलकण्ठं च तृणीकरिष्यन् ।
काश्मीरमासाद्य स शारदायाः सर्वज्ञपीठं पदमारुरुक्षन् ।।
तत्र स्थितान् सम्प्रति सर्वपण्डितांश्चार्वाकमुख्यान् विपुलान् विजित्य ।
स दक्षिणद्वाःस्थकवाटभेदं कृत्वाथ देव्या विनिशंक्यमानः ।।
शङ्कां निराकृत्य निविश्य पीठे ततो बदर्याश्रममाप दण्डी ।
नारायणं स्थाप्य तपज्जलौघं कुण्डं प्रशीतस्य निवारणाय ।।
ध्यात्वा शिवं तत्र निवेश्य तस्थौ कैलासदेशाद्वृषभश्च देवाः ।
तमेत्य संस्तुत्य यदायुषस्ते कालोऽगमत्त्वं वृषभेऽधिरोह ।।
इति प्रचीर्णः प्रभुरात्मनि स्वं विचिन्त्य शिष्यान्निजगाद मोदात् ।
यूयं चतुर्दिक्षु मठेषु लिङ्गैः साकं सदा संवसतेत्युदीर्य ।।
विवेश पृष्टं (३८) वृषभस्य हस्तं संगृह्य वैरिञ्चमथ प्रदत्तम् ।
विष्ण्वादिदेवैरभिवन्द्यमानः स शङ्करस्तन्निजधाम देवः ।।
विवेश केदारतलान्महात्मा सच्छन्दवृन्दारकवृन्दपूर्णम् ।



Scanned with CamScanner

Scanned with CamScanner

तदादितच्छङ्करभाष्यमेतद्भूमौजनं मुक्तिपदं विधत्ते ।।

एतत्तेऽभिहितं योगिन्मुख्यं मुक्तिपदावहम् ।

शाङ्करं चरितं लोके भविष्यति न संशयः ।। इति ।

सप्तशतीव्याख्यायां गुप्तवत्याख्यायां भास्कररायाग्निचिद्गुरुचरणकृतमाङ्गलिकपद्ये विष्णुधर्मोत्तरोपबृंहित एतां धेनुमुपह्वयामि इति ऋक्प्रतिपाद्य एवार्थोऽभिहितः ।

श्रीरामं प्रति पुष्कराभिधमहायक्षेण वेदत्रयी-

व्याख्यानावसरे विशिष्य कथितं श्रीविष्णुधर्मोत्तरे ।

एतां धेनुमुपह्वयामि सुदुघामित्यृग्गतं शङ्करा-

चार्यं शिष्यचतुष्टयेन सहितं वन्दे गुरूणां गुरुम् ।। इति ।

माधवीये श्रीशङ्कराचार्यविजये नवमसर्गे -

आद्ये सत्यमुनिः सतां वितरति ज्ञानं द्वितीये युगे

दत्तो द्वापरनामके तु सुमतिर्व्यासः कलौ शङ्करः ।

इत्येवं स्फुटमीरितोऽस्य महिमा शैवे पुराणे यत-

स्तस्य त्वं सुमते मते त्ववतरन् संसारवार्धिं तरेः ।। इति ।

यदत्र मूलकृता - नारायणः पुराणवाक्षु मध्वनिन्दां वीक्ष्य सासूयः समभूदित्युक्तम् । तत्रेदानीं मध्वनिन्दापराणि पुराणान्युदाहरामः । तथा हि - केदारखण्डे उपरिभागे एकषष्टितमाध्याये युगधर्मप्रस्तावे गरुडं प्रति कलिधर्मनिरूपणावसरे भगवानुवाच -

कलौ युगे प्रवृत्ते तु कलिः पापाधिनायकः ।

स्वशक्त्या सकलं धर्ममुन्मूलयितुमुद्यतः ।।

नानारूपैः प्रयत्नैश्च यदा धर्मो न नाशितः ।

तदा कलिर्भृशं क्रुद्धः समाहूय स्वमन्त्रिणः ।।

कामं क्रोधं मदं चैव लोभं मोहं च मत्सरम् ।

षडेतान् स्वामिकार्यार्थान् कुपितान् कलिरब्रवीत् ।।

कलिः -

भवन्तः शक्तिसम्पन्नाः शक्तिनाशैकहेतवः ।

उपेक्षध्वे कथं धर्ममनिर्मूल्य वृथायुधाः ।।



Scanned with CamScanner

Scanned with CamScanner

एवं ते कलिना पृष्टाः प्रत्यूचुः कलिपूरुषम् ।

कामः -

शृणु स्वामिन्प्रवक्ष्यामि(३९) त्वयादिष्टः पुरास्म्यहम् ।
अक्षोभयं त्रिभुवनम् सदेवऋषिमानुषम् ।
यदा पलायितो धर्मो मद्भीत्या भुवि सत्वरम् ।
तदा चोपनिषद्विद्या साङ्गा वेदचतुष्टयी ।।
तत्र वृत्ता ब्रह्मविद्या ब्रह्माद्वैतपरायणा ।
सा हि सर्वस्य लोकस्य मृषात्वं भाषते सदा ।।
ब्रह्मैव सत्यरूपं तत्प्रपञ्चस्तु मृषात्मकः ।
तस्माद्यतेत मतिमान् ब्रह्मैक्यावाप्तये सदा ।।
तत्फलं ज्ञानसाध्यं स्याज्ज्ञानं धर्मैकसाधनम् ।
धर्मसंग्रहयुक्तानां मुक्तिः करगता नृणाम् ।।
ततोऽस्माभिर्महान् यत्नो धर्मनाशकृते कृतः ।
व्यर्थो भवति विप्रेषु वेदैः प्रतिहतो भृशम् ।।
वेदमार्गविनाशाय यत्नं कुरु महामते ।

क्रोधादयः -

सम्यगाह महाराज कामोऽयं कलिनायक ।
यावद्वेदोदितो धर्मो यावद्वेदः प्रवर्तते ।।
यावच्चोपनिषद्विद्या यावदद्वैतभाषणम् ।
तावत्काममदादीनामस्माकं का कथा भुवि ।।
तस्माद्वेदाध्वविध्वंसे यत्नं कुरु महामते ।

कलिः -

आकर्णयध्वमखिलाः प्रतिज्ञां मम मन्त्रिणः ।
निर्मूलयामि सहसा वेदानस्मद्विरोधिनः ।।
उत्पाद्य मोहशास्त्राणि नानारूपाणि भूतले ।
वेषैर्भाषाप्रभेदैश्च पुण्ड्रैर्मुद्राभिरेव च ।।



Scanned with CamScanner

Scanned with CamScanner

मनोहरैर्मृषाधर्मैर्वञ्चयिष्यामि भूसुरान् ।
नानाभाषाप्रभेदैश्च ध्वंसयिष्यामि वै श्रुतीः ।।

भगवान् -

इत्थं कलिः प्रतिज्ञाय चकार विवधागमान् ।
प्रथमं विष्णुपाषण्डं शिवपाषण्डकं ततः ।।
जैनशास्त्रं ततः कृत्वा तौरुष्कमकरोत्ततः ।
शाक्तं च पञ्चमं कृत्वा कामादीनादिदेश ह ।।

कलिः -

पञ्चानामागमानां हि यूयं भूमौ प्रवर्ध(र्त)काः ।
निवर्तयध्वं वेदेभ्यः स्वशक्त्या सर्वभूसुरान् ।।
विनाशयत धर्मान्वै श्रुतिस्मृत्युदितान् भुवि ।
कामक्रोधौ युवां शास्त्रं विष्णुपाषण्डनामकम् ।।
द्विधा व्याकुरुतम् भूमौ भाषाद्वयपरिग्रहात् ।
द्विजयोनौ जनिं प्राप्य शङ्खचक्रादिलाञ्छनैः ।।
हरिद्राचूर्णरेखाभिः पीतश्वेतमृदादिभिः ।
पुण्ड्रैर्बहुविधैश्चापि प्रतार्य निखिलं जगत् ।।
ब्राह्मणान् क्षत्रियान्वैश्यान् शूद्रांस्तदितरानपि ।
आचण्डालं वशीकृत्य (४०) वेषैर्भाषाभिरेव च ।।
भूषाभिश्च धनैर्धान्यैरुपचारैर्भयैरपि ।
मन्त्रौषधप्रयोगैश्च भ्रंशयित्वा स्वशक्तितः ।।
विनिष्ठं कुरुतं धर्मं श्रुतिस्मृत्युदितं भुवि ।

भगवान् -

एवं सन्दिश्य कलिराट् कामक्रोधौ स्वमन्त्रिणौ ।।
लोभं वियोजयामास पाषण्डे शैवनामके ।
तौरुष्के मदमादिश्य शाक्ते तं मत्सरं तथा ।।
जैनशास्त्रे तथा मोहं मेने स्वं च कृतार्थवत् ।



Scanned with CamScanner
Scanned with CamScanner

कामक्रोधादयः सर्वे गृहीत्वा तस्य शासनम् ।।
अधीत्य तानि शास्त्राणि कलिना निर्मितानि वै ।
अवतीर्य ततो भूमौ कामक्रोधमदादयः ।।
व्याख्यास्यन्ति च ते तत्र मोहशास्त्राणि सर्वशः ।
अधीत्य तानि शास्त्राणि त्यक्ष्यन्ति च जनाः श्रुतीः ।।
कामस्तु द्रविडे देशे वर्धमानो महाद्युतिः ।
कलिपूरुषसन्देशाद्विष्णुपाषण्डनामकम् ।।
व्याख्यास्यति दुरात्मासौ मोहयित्वा जनान्भृशम् ।
भङ्क्त्वा सूत्राणि सर्वाणि ब्रह्माद्वैतपराणि च ।।
श्रुतीः स्मृतीस्तथा भङ्क्त्वा द्वैते संस्थापयिष्यति ।
कारयिष्यति पुण्ड्राणि द्विजाद्यैः श्वेतमृत्स्नया ।।
तप्तलोहैर्द्विजादीनां दहिष्यति कलेवरान् ।।
त्याजयिष्यन्ति कर्माणि वैदिकानि दुरात्मवान् ।
भाषाकृतप्रबन्धानि पाठयिष्यति सर्वतः ।।
अभेदवादिनः साधून् दूषयिष्यति दुर्मतिः ।
क्रोधः कर्नाटदेशीयः कामशास्त्रं निरीक्ष्य च ।।
स्वयं व्याख्यास्यते तात तद्विरुद्धमते स्थितः ।
तत्त्ववादसमाख्यां च कृत्वा तस्मिन्निजागमे ।।
श्रुतिस्मृतिपुराणानि भञ्जयिष्यति दुर्मतिः ।
स्वयं करिष्यते धीरः पुराणानि श्रुतीः स्मृतीः ।।
अष्टादशपुराणेषु स्मृतिष्वष्टादशस्वपि ।
अद्वैतनिरतं सर्वं वाक्यमुत्पाटयिष्यति ।।
कारयिष्यति पुण्ड्राणि वेणुपत्राकृतीनि च ।
स्वकल्पितपुराणानि व्यापयिष्यति भूतले ।।
तत्त्ववादमते स्थित्वा केचिद्ब्राह्मणबान्धवः ।
दाहयिष्यन्ति गात्राणि तप्तलोहैर्द्विजाधमान् ।।



Scanned with CamScanner

दग्धदेहाश्च ते सर्वे त्यक्तवैदिकसत्क्रियाः ।
ब्राह्मणानेव निन्दन्ते श्राद्धयज्ञान्महारुषः ।।
दुरात्मनो दुराचाराः क्रिमिकूपे भयङ्करे ।
पतिष्यन्ति न सन्देहो भोक्ष्यन्तेऽपि च यातनाः ।। इति ।

एतदेवाभिप्रेत्योक्तमभियुक्तैः -

सन्देशात्कलिभूपतेः प्रकटयन् यो विष्णुपाषण्डतां
क्रोधो मध्वयतिर्भवन् क्षितितले द्वैतं जगौ मूढधीः ।
हित्वानादिवचांस्ययं श्रुतिपुराणादीन्वितन्वन् स्वयं(४१)
विप्रान् मोहयति स्म भूमिवलये तप्तारिधृत्यादिभिः ।। इति ।

पराशरसंहितायाम् -

मूको नामाभवत्कश्चित् दानवो दुष्टमानसः ।
स कदाचिद्वनान्ते तु वाराहीं तनुमाश्रितः ।।
बाधमानो मुनीन् साधून् यज्ञानपि चचार ह ।
क्रमात्सञ्चरमाणोऽसौ पार्थाश्रममुपागमत् ।।
तपस्यन्तं पृथासूनुं वराहाद्रक्षितुं हरः ।
किरातवेषमाधाय विचचार महावने ।।
किरातादभीतिमापन्नो वराहः पार्थमाश्रितः ।
निवारितोऽपि पार्थेन किरातो हतवान् किटिम् ।।
सन्त्यक्तकिटिरूपोऽसौ मूको नामासुरस्तदा ।
कलावीशापकाराय कर्नाटे सम्भविष्यति ।।
मधुनामवहन्नेष व्याससूत्राणि केवलम् ।
द्वैतमार्गानुसारेण व्याख्यास्यति सुमूढधीः ।।
तप्तचक्राङ्कितान् विप्रान् करिष्यति च भूतले ।
दीपाश्वत्थदलाकारतिलकादीन् करिष्यति ।।
अद्वैतनिरतं वाक्यं द्वैते संस्थापयिष्यति ।
श्रुतीः स्मृतीः पुराणानि स्वयमेव करिष्यति ।।



Scanned with CamScanner

Scanned with CamScanner

अद्वैतवाक्यजालानि ग्रन्थेभ्यो वारयिष्यति ।
इत्याद्यनर्थकरणैः कृतार्थं वेत्स्यति स्वकम् ।। इति ।

पराशरसंहितामनुसृत्योक्तमद्वैतस्तवे -

धृत्वा कैरातवेषं मनसिजरिपुणा दानवो मूकनामा
रक्षार्थं पाण्डुसूनोः प्रकटकिटिवपुर्यो हतः पूर्वमद्रौ ।
सोऽयं पाषण्डवादी समजनि तुलवः क्रोधनो मध्वनामा
भर्गे मात्सर्यबुद्धिर्धरणितलगतो भेदवादान् जजल्प ।। इति ।

तुलवस्तुलवदेशजो मध्व इति तद्व्याख्यातारः । सौरपुराणेऽपि -

श्रीमहेशात् परो देवो न समो नास्ति चाधिकः ।

इत्यादिना शिवमाहात्म्यं वक्तुमुपक्रममाणं सूतं

केचिल्लोका महेशानं त्यक्त्वा केशवकिङ्कराः ।
तत्र किं कारणं सूत वद संशयनाशक ।।

इत्यादिना केशवसेव्यतायां कारणं पृष्टवत्सु मुनिषु,

यदा यदा प्रसन्नोऽभूद्भक्तिभावेन धूर्जटिः ।
विष्णुनाराधितो भक्त्या तदासौदत्तवान् वरान् ।। इत्युपक्रम्य,
जन्मादिकारणं शम्भुं विष्णुब्रह्मादिकारणम् ।
न जानन्ति महामूर्खा विष्णुमायाविमोहिताः ।

इत्यन्तेन शिवत्यागकेशवपरिग्रहयोः कारणमुक्त्वा किञ्चनोपाख्यानं वक्तुं उपचक्राम सूतः ।(४२) तथाहि - प्रतर्दनो नाम राजर्षिर्धर्मेण राज्यं परिपालयन् कदाचिद्बहिर्निर्गतोऽवलोक्य कञ्चन क्षपणकं, अधिगत्य विस्मयम्, आपृच्छ्य जात्यादिकम्, आकर्ण्य वणिगहमिति तेन निरूप्यमाणमर्थं परिपृच्छ्य यतिवेषधारणकारणम्, निशम्य च -

अहिंसा परमो धर्मस्तत्तत्त्वं यत्तनोर्दमः ।
बुध्यते बुद्धजैनाभ्यां वक्ता तस्य जिनो मतः ।।
वेदवेदाङ्गवक्तारो याज्ञिका वैष्णवा द्विजाः ।
माहेश्वरा महापूज्या न व्यक्तोऽहं भयान्नृप ! ।।

इत्यादिना तेन निरूप्यमाणं कारणं, निहत्य तं वेदबाह्यक्षपणकं, विधाय च तपो ब्राह्मणमुद्दिश्य



Scanned with CamScanner

Scanned with CamScanner

सप्रजस्यात्मनो वेदप्रामाण्यदाढर्याय समुपेत्य च तद्वरम्, सम्प्राप्य च स्वनगरम्, समाहूय मन्त्रिणो विचार्य प्रजाकृत्यानि समाकर्ण्य तैर्निरूप्यमाणं प्रजानामद्वैतविद्यातत्परत्वं विभाव्य नास्तिकशून्यां वसुन्धरामभिनन्दयन् वरदातारं पङ्कजयोनिं पर्यपालयच्चिरं वसुधाम् । अथ चाभेदभावनया शिवकेशवाद्याराधनतत्परासु प्रजासु, सद्गतिं गतेषु निरयगामिषु तत्तत्पितृषु, निर्व्यापारे सकिङ्करे यमे, समुपेत्य स्वर्गमावेदयति स्वलोकवृत्तान्तं देवसंसदि, समाकर्ण्य तमिन्द्रे, इतः परमस्माकं हीनजीवानां च को विशेष इति चिन्तया समुपेत्य बृहस्पतिमावेद्य स्वाभिमतमर्थं प्रार्थयमाने, निशम्य बृहस्पतौ, विधिदत्तवरस्याहमुच्छेदे शक्तिमान्, कथमित्युक्तवति, देवतागणनिर्बन्धतः

शृण्वन्तु त्रिदशाः सर्वे ममोपायं वदाम्यहम् ।
देवः कश्चिद्यदि भवेत्कपटो वैष्णवः स्वयम् ।।
तप्तचक्राङ्कितितनुस्तुलसीदामभूषणः ।
उर्ध्वपुण्ड्रं च बिभ्राणो हरिनामाक्षरं जपन् ।।
शिवद्वेष्टा महापापप्रेरकः शिवनिन्दकः ।
दम्भेन यदि तद्राज्ये शिवनिन्दा कृता भवेत् ।।
तदा तत्पूर्वजाः सर्वे निरयं यान्ति दारुणम् ।

इत्युपायं वदत्यपि,

कश्चाण्डालः शिवं ब्रूयात्साधारण्येन विष्णुना ।
यस्य प्रसादाद्वैकुण्ठः प्राप्तवानीदृशं पदम् ।।

इति वदत्सु देवेषु तूष्णींभूते देवेन्द्रे च कञ्चन किङ्करमाहूय त्वं सशिष्यः (४३) कपटवैष्णवो भूत्वा गत्वा भुवं, शिवनिन्दां विष्णूत्तमत्वं ख्यापय इत्याज्ञापयति । किन्नरे च कस्मिंश्चिदङ्गीकृत्य तद्वचनं, विधृत्य वैष्णवचिह्नानि परिवृत्य कपटवैष्णवशिष्यैरधिगत्य प्रतर्दननगरमध्युष्य चक्रपाणिदेवालयम्, विदधाने शिवनिन्दाम्, राजा प्रतर्दनः कस्याञ्चिदेकादश्यां चक्रपाणि चरणारविन्दसन्दर्शनमनसा समागतो वैष्णवमेनं शिवनिन्दकमवलोक्य विषण्णो भूत्वा वेदप्रामाण्यनिर्णयाय पण्डितानाह्वयितुमैच्छत् । अथ -

गृहं गत्वा स्थितो राजा यावदाह्वयते द्विजान् ।
तावदेव कलिः पापो ब्राह्मणेषु विवेश ह ।।

ततः समागताः विद्वांसः केचन शिवनिन्दां केचन विष्णुनिन्दां केचिद् उभयनिन्दां च



Scanned with CamScanner

कुर्वन्तो विवदमाना आसन् । दिव्यलोकगताश्च तत्तत्पितरो यमराजधान्यां नरकेष्वपतन् । राजापि तं कपटवैष्णवं हन्तुमियेष, शिवं च दध्यौ ।

एतस्मिन्नेव काले तु कमलाहृदयंगमः ।
भूय आक्रन्दमकरोच्छोणितौघपरिप्लुतः ।।
लक्ष्मीर्दृष्ट्वा च तद्रूपं भयविह्वलमानसा ।
प्राप्ताश्चर्या महाघोरं रुरोद भृशदुःखिता ।।

ततः -

वेदान्तवेद्य पुरुषोत्तम देवदेव त्रैलोक्यनाथ किमिदं त्वयि दृश्यतेऽद्य । इति लक्ष्मीपृष्टो नारायणः -

उक्तं त्वया यदपि लक्ष्मि तथैव किन्तु
मत्स्वामिनोऽवगणना न हि शक्यते मे ।

इत्युपक्रम्य,

वेदवेदाङ्गवेत्तॄणां सहस्राणां द्विजन्मनाम् ।
हननान्मुच्यते जीवो न तु श्रीशिवहेलनात् ।।
गुर्वङ्गनागमनकृत्सदा मद्यनिषेवकः ।
ब्राह्मणः स्वर्णहर्ता च कदाचिन्मुच्यते जनः ।
स्त्रीगोघ्नो नृपतिघ्नश्च तथा विश्वासघातकः ।
कृतघ्नो नास्तिको लुब्धः कदाचिन्मुच्यते जनः ।।
न तु श्रीरुद्रसामान्यदर्शी मुच्येत बन्धनात् ।
विरिञ्चिविष्णुशक्रेभ्यः सर्वोत्कृष्टं न जानते ।।
विष्णुना यदि चातुल्यं मुच्यन्ते नैव जन्तवः ।
स्वामी मदीयः श्रीकण्ठस्तस्य दासोऽस्मि सर्वदा ।।

इत्यन्तेन प्रत्युत्तरं दत्तवान् ।

ततस्तौ गरुडारूढौ गत्वा कैलासपर्वतम् ।
नानाविधैः स्तोत्रपदैः सन्तुष्टं चक्रतुः क्षणात् ।।
ततो ब्रह्मादयो देवाः सिद्धास्तत्रागता गिरौ ।(४४)



Scanned with CamScanner

रुद्रः कौतूहलं प्रेप्सुः सर्वैस्तैः परिवारितः ।।
भवानीसहितस्तत्र गतो यत्र प्रतर्दनः ।
सर्वदेवविमानानां मध्ये तिष्ठन् शिवोऽवदत् ।।

महेशः -

कथयन्तु कथं ह्यते मिलिताः सर्वनिर्जराः ।
किं कार्यं किमपूर्वं वा नानाचिन्तातुराः कथम् ।।

देवाः -

स्वामिन् प्रतर्दनो राजा विधिदत्तवरो महान् ।
वेदमार्गप्रवक्ता च स्वयं तस्य प्रवर्तकः ।।
कल्पितो वैष्णवोऽस्माभिस्तव निन्दापरायणः ।

सूतः -

एतस्मिन्नेव काले तु राजा वृत्तान्तमीयिवान् ।
तीव्रं खड्गं समादाय हतवान् किङ्करं क्रुधा ।।
तत्पक्षपातिनो ये च तेषां शीर्षाणि कन्धरात् ।
पृथक् कृतानि पश्वाद्या हता अश्वा अनेकशः ।।
न तं वारयते कश्चिद्राजानं पुण्यचेतसम् ।
महादेवेन शमितः क्रोधस्तस्य महात्मनः ।।
ततः कोलाहले शान्ते नन्दी कौतुकपूर्वकम् ।
युयोज हयशीर्षैस्तच्छरीराणि पृथक् पृथक् ।।
शीर्षाणि हयगात्रैश्च सम्यक् संयोज्य बुद्धिमान् ।
उवाच वचनं तथ्यं देवसंसदि शुद्धधीः ।।

नन्दी -

येन वक्त्रेण गिरिशो हेलितस्तन्मुखं हयः ।
मुद्राधारणगर्वेण हेलितस्तत्तनुर्हयः ।।
जातं तदधुना सत्यं राजर्षौ राज्यकर्तरि ।
भविष्यं कथयिष्यामि तच्छृणुध्वं समाहिताः ।।



Scanned with CamScanner

घोरे कलियुगे प्राप्ते म्लेच्छैर्व्याप्ते भुवस्तले ।
सर्वाचारपरिभ्रष्टा भविष्यन्ति नराधमाः ।।
तदान्ध्रदेशे विकले दाक्षिणात्यो भविष्यति ।
ब्राह्मणो दुर्भगः कश्चित् विधवब्राह्मणीरतः ।।
तस्य पापिष्ठविप्रस्य व्यभिचारात्सुतो मधुः ।
भविष्यति शिवद्वेषी अवेदाध्ययनोत्सुकः ।।
पद्मपादुकमाचार्यवरं वेदान्तवेदिनम् ।
अद्वैतागमबोद्धारं प्रणम्य प्रार्थयिष्यति ।।
विप्रोऽहं मधुशर्मास्मि स्वामिन् मां पाठय प्रभो ।
आचार्यः करुणामूर्तिर्विनयेन परिप्लुतम् ।।
स करिष्यति शिष्याणामग्रण्यं प्रेमवत्सलः ।
ततो दिने दिने भक्तिं करिष्यति यथा तथा ।।
गुरुर्भवति सन्तुष्टः सर्वा विद्याः प्रयच्छति ।
शिष्यस्य हेतुवादाद्यैः कुपितेन महात्मना ।।
पृष्टोऽसौ गुरुणा तथ्यं गोलकोऽयं वदिष्यति ।
धर्मः साधारणो नाथ कृतोऽयं केन कुप्यसि ।।
ततो वक्ष्यत्यथाचार्यः कस्ते तातः प्रसूश्च का ।
तातो मे ब्राह्मणः स्वामिन् ब्राह्मणी च प्रसूर्मम ।।
विज्ञाता जननी(४५) सम्यङ् न ज्ञाता जनकाभिधा ।
शापं दास्यत्यथाचार्यः सिद्धान्तो मा स्फुरत्त्वथ ।।
सिद्धान्ते जडता तेऽस्तु परमाद्वैतशासने ।
ततोऽयमुन्मत्तमार्गो मध्वाख्यः शिवनिन्दकः ।।
पूर्वं तु द्रविडाद्देशात्कर्नाटककलिङ्गयोः ।
शनैर्गोदावरीतीरे प्रसृतोऽयं भविष्यति ।।
तप्तारिलाञ्छनं धत्ते तिलकं पद्मसन्निभम् ।
आत्मा भिन्नो जगत्सत्यमणवो जीवराशयः ।।



Scanned with CamScanner

इत्यागमविरुद्धार्थं वक्ति स्वोक्त्यैव केवलम् ।
ततः परं भविष्यन्ति तस्य शिष्या अनेकशः ।।
मायावादमसच्छास्त्रं वदिष्यन्ति नराधमाः ।
तेषां दर्शनमात्रेण सचैलं स्नानमाचरेत् ।।
भद्रत्वं च यथा विष्टे राहोः स्वर्भानुता यथा ।
हरित्वं च यथा भेके तथा ते तत्त्ववादिता ।।
योगनिन्दापरा नित्यमग्निहोत्रस्य निन्दकाः ।
वेदान्तसममित्याहुः प्राकृतं च नराधमाः ।।
केवलं वेदमात्रेण नरा नरकगामिनः ।
सम्भाषणे कृते तेषां पतेच्च ब्रह्मवर्चसः ।।
वरं बौद्धस्तथा जैनः कापालिकमतोऽपि वा ।
व्यक्तं वदन्ति वेदानामप्रामाण्यं तु तैः किमु ।।
वेदं प्रमाणवत् कृत्वाऽभिमानिनववैदिकाः ।
ईश्वरं वचनाद्ब्रूयुर्विभिन्नं जीवतः खलाः ।।
संन्यासवेषमात्रेण कुर्वाणा जीविका निजाः ।
राजसेवां प्रकुर्वाणाः प्रच्छन्ना अपि लौकिकाः ।।
अगम्यागमने सक्ता अभक्ष्यस्य च भक्षणे ।
अपेयनिरताः केचिन्नानाभोगसमाकुलाः ।।
यानारूढाः सदा राजसेवायां तत्परा अपि ।
अद्वैतनिन्दानिरताः प्रच्छन्नग्रन्थगौरवाः ।।
अन्यदर्शनसिद्धान्तं नैव जानन्ति तत्त्वतः ।
तत्र दोषानेव सदा पठिष्यन्ति कलौ युगे ।।
अन्यदैवतनामानि यदि हेयानि तत्कथम् ।
वेदं पठन्ति पापिष्ठाः कथं तर्कं वदन्ति हि ।।
मीमांसाशास्त्रसद्ग्रन्थानालोक्य च पुनः पुनः ।
पूर्वपक्षं च सर्वेषां गृहीष्यन्ति समत्सराः ।।



Scanned with CamScanner

स्वकीयं न वदिष्यन्ति यतो नास्ति प्रभाकरम् ।
हंसान् परमहंसांश्च निन्दिष्यन्ति च जारजाः ।।
जातमात्रं नरं कञ्चित् मुण्डयित्वा मठाधिपम् ।
काषायवस्त्रमात्रेण करिष्यन्ति नराधमाः ।। (४६)
माठापत्यं च सेवा च धनसङ्ग्रह एव च ।
दासीगमनमीर्ष्या च पञ्चधा तत्त्ववादिता ।।
संसारस्तत्त्वमित्येव वदन्तो(न्ति) तत्त्ववादिनः ।
मायाविलसितं विश्वमिति मायैकवादिनः ।।
शुद्धतत्त्वं न जानन्ति विश्वं तत्त्वं वदन्ति च ।
शब्दमात्रेण ते जाता कलौ हा तत्त्ववादिनः ।।
भविष्यन्ति यदा देवाः पापानां प्रभवः कलौ ।
तथा तथा भविष्यन्ति ह्युदीच्यां दम्भवैष्णवाः ।।
शिवसामान्यवक्तारं शिवसामान्यदर्शिनम् ।
दृष्ट्वा स्नायात्सचैलः सन् शिवसामान्यसङ्गिनम् ।।
मधुदर्शितमार्गेण या निष्ठा वैष्णवी कलौ ।
भविष्यन्ति ततो म्लेच्छा वेदमार्गबहिष्कृताः ।।
एतादृशो द्वैतिनोऽन्ये भविष्यन्ति महीतले ।
शिवद्रोहात्पतिष्यन्ति नरकेषु न संशयः ।।

इति नन्दिकेश्वरवचनान्तमुपाख्याय, सूत उवाच -

एवं जाते ततः सर्वे यथागतमितो गताः ।
प्रतर्दनोऽपि राजर्षिः कृत्वा राज्यमकण्टकम् ।।
देहान्ते मुक्तिमापन्नः परमाद्वैतलक्षणाम् ।
तस्माच्छृणुध्वं विप्रेन्द्रा माहात्म्यं पार्वतीपतेः ।।
भक्तिं च परमां कर्तुमुद्यता भवत द्रुतम् ।

ऋषयः -

सूत भद्रं समाचक्ष्व सेवको यस्य माधवः ।



Scanned with CamScanner

श्रीमहेशस्य विष्णोश्च तुल्यत्वं ब्रुवते कथम् ।।
ब्रुवन्ति तुल्यतां केचित् वैपरीत्यं च केचन ।
एकत्वं केचिदीशेन केशवस्य वदन्ति हि ।।
अत्र सिद्धान्तमर्यादां ब्रूहि तत्त्वेन सूतज ।
अबाधं येन चास्माकं संशयो विनिवर्तते ।।

सूतः -

शृण्वन्तु मुनयः सर्वे श्रुतिसिद्धान्तमुत्तमम् ।
महेशान्न परं तत्त्वं सर्ववेदेषु गीयते ।।
वैकुण्ठप्रभृतीनां च महेशकृपया श्रियः ।
महेशस्य च दासोऽयं विष्णुस्तेनानुकम्पितः ।
श्रुतिस्मृतिपुराणानां सिद्धान्तोऽयं यथार्थतः ।
इन्द्रोपेन्द्रादयः सर्वे वैकुण्ठस्यैव किङ्कराः ।।
वेदान्तवेद्यमीशानं पार्वतीरमणं प्रभुम् ।
यो जानाति स वैकुण्ठो दुःखहा सर्वदेहिनाम् ।।
वैकुण्ठं मन्यते सम्यगीशानं स पुरन्दरः ।
य इदं मन्यते सर्वं स्वामिनं स ऋषिर्मतः ।।
स्वर्गं लोकं समाप्नोति मुन्याज्ञाप्रतिपालकः ।(४७)
अद्वैतं शिवमीशानमज्ञात्वा नैव मुच्यते ।।
यदुक्तं नन्दिना पूर्वं तत्तथैव भविष्यति ।
घोरे कलियुगे प्राप्ते श्रीशङ्करपराङ्मुखाः ।।
भविष्यन्ति नरास्तथ्यमिति द्वैपायनोऽब्रवीत् ।
रुद्रक्रोधाग्निनिर्दग्धे मन्यथे तस्य भार्यया ।।
रत्या विलपिते तस्य सखायोऽप्यतिदुःखिताः ।
वसन्तादय आगत्य तामूचुः किं विधीयते ।।
सर्वलोकेशितुः शम्भोर्वरः को वैरवारणे ।



Scanned with CamScanner

रतिः -

मत्पतेर्घातुकः सर्वलोकपूज्यो भवेदयम् ।
तत्र विघ्नः प्रकर्तव्यो येन केनापि हेतुना ।।
अस्यापकीर्तिर्वक्तव्या न भवेद्यदि किञ्चन ।
तेन मे दुःखशान्तिः स्यात्किञ्चिन्मात्रं न चान्यथा ।।

वसन्तादयः -

चतुर्दशसु विद्यासु गीयते चन्द्रशेखरः ।
वेदान्ता यं च गायन्ति मुनयः शंसितव्रताः ।।
ब्रह्माद्या देवताः सर्वा इन्द्रोपेन्द्रादयस्तथा ।
न्यूनतां तस्य यो ब्रूते कर्मचण्डाल उच्यते ।।
तेन तुल्यो यदा विष्णुर्ब्रह्मा चेति निगद्यते ।
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ।।
तुल्यता यदि नो शक्या न्यूनतायास्तु का कथा ।
मित्रस्यानृण्यमिच्छामः सङ्कटं प्रतिभाति नः ।।

सूतः -

विचार्यैवं ततः सर्वे मधुमोहपुरःसराः ।
तपस्तेपुर्महारौद्रं सर्वलोकभयङ्करम् ।।
कदाचिद् भगवान् ब्रह्मा प्रादुरासीद्दयानिधिः ।
मोहो दम्भस्तथा क्रोधो लोभस्ते सेवकाः कलेः ।।
पञ्चमो हेतुवादश्च मधुना सर्व आश्रिताः ।
तानुवाच ततो ब्रह्मा वृणीध्वं मनसेप्सितम् ।।
यथा वृणीत भवतां तथाहं दातुमुद्यतः ।

मोहाद्याः -

अस्माकं परमं मित्रं कन्दर्पो नाशितः प्रभो ।
महादेवेन तेनामी आनृण्यं कर्तुमुद्यताः ।।
भविष्यामो वयं तात रुद्रपूजाभिनिन्दकाः ।



Scanned with CamScanner

यथा न लभते पूजामस्मत्तश्चन्द्रशेखरः ।।

ब्रह्मा -

अधुना न भवेदेवं भविष्यत्यथ तच्चिरम् ।
भविष्याम इति प्रोक्तं भवतां नान्यथा क्वचित् ।।
ये भवद्वशगा लोकास्तेषां पूजा न धूर्जटेः ।
प्रार्थितोऽयं वरो दत्तो यथेष्टं कर्तुमर्हथ ।।

सूतः -

इत्युक्त्वा तानथो ब्रह्मा तत्रैवान्तरधीयत ।
सर्वे ते मन्त्रयामासुः कलिना सह दुःखिताः ।।

कलिः -

भवद्भिरधुना सर्वे भविष्याम इतीरितम् ।(४८)
ततो मत्समये प्राप्ते सर्वमेव भविष्यति ।।
अस्मत्त इति यत्प्रोक्तं तेन चास्मद्वशे स्थिताः ।
निन्दाकरा भविष्यन्ति विधिदत्तवराद्भुवि ।।
लोभमोहादिसंयुक्ताः प्राप्ते च मयि दारुणे ।
हेतुवादं पुरस्कृत्य शिवभक्तिपराङ्मुखाः ।।

सूतः -

मधुमोहादयः सर्वे रतिमाश्वास्य भामिनीम् ।
प्रोचुश्च श्लक्ष्णया वाचा तद्दुःखविनिवारकाः ।।

मोहादयः -

रते ! मा कुरु सन्तापं महामोहः कलेः सखा ।
क्रोधः पत्युः परो बन्धुर्लोभमोहौ च देवरौ ।।
प्राप्ते कलियुगे पूर्णे लोभमोहादयो वयम् ।
वसन्तं मधुनामानमवतीर्णं च दक्षिणे ।।
समाश्रित्य ततो हेतुवादं कुटिलबुद्धयः ।
करिष्यामो यथाशक्यं शिवपूजानिवारणम् ।।



Scanned with CamScanner

सूतः -

इति ते रतिमाश्वास्य यथागतमितो गताः ।
ततः कलियुगे प्राप्ते सर्वधर्मबहिष्कृते ।।
म्लेच्छैर्ब्राह्मणधेनूनां विध्वंसनकरे खरे ।
अस्वाध्यायवषट्कारे जैनबौद्धादिसङ्कुले ।।
ब्राह्मणे म्लेच्छमार्गस्थे शूद्रे ब्राह्मणघातिनि ।
तदा वसन्तः कर्नाटत्रिलिङ्गाधिकदूषकः ।
मधुनामा तु विधवागर्भे जाराद्भविष्यति ।।
गोलकः स तु पापिष्ठः पद्मपादुकमीश्वरम् ।
वेदान्तव्याख्यानरतं शिष्यत्वेनार्चयिष्यति ।
शास्त्रं पूर्णं ततोऽधीत्य स्थित आह्निकवर्जितः ।।
किमग्निहोत्रं को यागो हेतुमेवं करिष्यति ।
गुरुराकर्ण्य तद्वाक्यं ब्राह्मणो न भवेदयम् ।।
इति निश्चित्य तं दुष्टं वक्ष्यति श्रुततद्वचाः ।।

गुरुः -

को वर्णस्तव रे ! ब्रूहि यथार्थं वेददूषक ! ।
कर्म ब्रह्मोद्भवं द्वेष्टुर्नोत्पत्तिर्ब्राह्माणात्तव ।।

मधुः -

ब्राह्मण्यामहमुत्पन्नो ब्राह्मणाच्च न संशयः ।
सत्यं वदामि नो मिथ्या कथं मां पश्यसे गुरो ।।

गुरुः -

त्वन्माता कुत्र जाता रे ! कस्य पुत्री कदा कथम् ।
कस्मै दत्ता च विधिना केन तद्ब्रूहि मां चिरम् ।।

मधुः -

विधवा जननी नाथ ! ब्राह्मणी जारसङ्गता ।
गर्भिणी समभूदस्मादयं देहस्ततोऽभवत् ।।



Scanned with CamScanner

Scanned with CamScanner

गुरुः -

कपटेन यतः शास्त्रं मत्तोऽधीतं त्वयाधुना ।
तेन सिद्धान्तमर्यादा कदाचिन्मा स्फुरत्वियम् ।।

मधुः -

भविष्यति महाभाग ! वचनं तव नान्यथा ।
पूर्वपक्षो मम हृदि प्रादुर्भवतु निश्चलः ।।

गुरुः -

अन्धता तव (४९) सिद्धान्ते पूर्वपक्षे च पाटवम् ।
भवत्वेवं परं त्वेकं पापाः शिष्याः भवन्तु ते ।।
मोहात्सिद्धान्तरहिता लोभात्ते नृपसेवकाः ।
क्रोधात्कठिनवक्तारो दम्भाद्वेषेण सुन्दराः ।।
हेतुवादेन शास्त्राणि सर्वाणि न विदन्ति ते ।
निरयेष्वेव घोरेषु पतिष्यन्त्यचिराद्ध्रुवम् ।।

सूतः -

मधुनामा ततः प्राप्य शापं तं दुष्टबुद्धिमान् ।
मध्वाचार्यस्ततो भूत्वा दाक्षिणात्यो महाकलौ ।।
बादरायणसूत्राणां व्याख्यानं स करिष्यति ।
तच्छिष्याः प्रतिशिष्याश्च नार्यावर्ते न चोत्कले ।।
न गौडे न च गङ्गायास्तीरे गोदातटे न हि ।
नार्बुदारण्यमध्ये च तत्प्रचारो भविष्यति ।।
यथा यथा कलेर्घोरः प्रचारो हि भविष्यति ।
तथा तथा महाराष्ट्रे हैतुका विरलाः क्वचित् ।।
ततोऽतिदुष्टसमये महाम्लेच्छैस्तिरस्कृते ।
प्रच्छन्नः कुत्रचित्पापी निवसिष्यत्ययं चिरम् ।।
क्रमादयं तु संन्यासी पठित्वा दुष्टबुद्धिमान् ।
शिष्योपशिष्यसंयुक्तो हेतुवादं करिष्यति ।।



Scanned with CamScanner

तत्त्वं संसार इत्येव न बाध्यः सत्य एव हि ।
वदत्यतस्तत्त्ववादी मायावादी स उच्यते ।।
मिथ्याभूतः प्रपञ्चोऽयं मायानिर्मित उच्यते ।
मायावादिन इत्येते वस्तुतस्तत्त्ववादिनः ।।
सच्छास्त्रं जैमिनीयं तु कर्मकाण्डप्रवर्तकम् ।
गौतमीयं तु तच्छास्त्रमीश्वरप्रतिपादकम् ।।
पुम्प्रकृत्योर्विवेकस्य बोधकं कापिलं मतम् ।
तथा वैशेषिकं शास्त्रमीश्वरप्रतिपादकम् ।।
पातञ्जलं योगशास्त्रं शैवं तच्छास्त्रमुच्यते ।
वेदान्तशास्त्रं मूर्धन्यमद्वैतं यच्च बोधयेत् ।।
वेदाः सर्वे षडङ्गानि पुराणानीतिहासकाः ।
स्मृतिश्चोपपुराणानि तथोपस्मृतयः शुभाः ।।
अन्योन्यं सर्वविद्यानां प्रामाण्यमधिकं ततः ।
तात्पर्यं च पुमर्थेषु सर्वाण्येव जगुः किल ।।
पापिष्ठा नैव मन्यन्ते वेदमार्गबहिष्कृताः ।
आचार्यं मधुनामानं वदन्तो विधवासुतम् ।।
प्रच्छन्नोऽसौ महादुष्टश्चार्वाको मधुसंज्ञकः ।।
भविष्यति कलौ विप्राः शिवनिन्दाप्रवर्तकः ।
मोहात्सिद्धान्तबाह्यत्वं क्रोधाच्छास्त्रनिषेधनम् ।।
लोभेन धनिनां सेवा दम्भादन्यप्रतारणम् ।
गणिकामैथुनं कामान्मात्सर्याद्धेतुवादिता ।।
भविष्यति(५०) कलौ विप्राः षोढेयं तत्त्ववादिता ।
हठात्कञ्चिद्यतिं कृत्वा क्रमेणादाय बालकम् ।।
माठापत्यं विधास्यन्ति द्रव्यलोभेन नास्तिकाः ।
लोभासक्ताश्च पापिष्ठा दासीगमनकारिणः ।।
नाम्ना सन्यासिनस्तीर्थे यानारूढाः ससेवकाः ।



Scanned with CamScanner

Scanned with CamScanner

नरवाहनमारूढाः शिवसूत्रबहिष्कृताः ।।
तत्पक्षपातिनो मूढा गृहस्थाः शिवनिन्दकाः ।
मिथ्यावैष्णवमानेन ग्रस्ता निरयगामिनः ।।
वैष्णवा वेषमात्रेण तन्तुमात्रेण वाडवाः ।
वादिनः क्रोधमात्रेण विद्वांसो हेतुवादतः ।।
पठिष्यन्ति च शास्त्राणि केचिद्दूषणसिद्धये ।
स्वकीयं गोपयिष्यन्ति परकीयेन पण्डिताः ।।
इति सर्वं समाख्यातं शिवनिन्दनकारणम् । इति ।

एतदेवाभिप्रेत्याभियुक्तैरभिहितम् -

ध्वस्ते शम्भुललाटनेत्रशिखिना कान्ते रतौ केवलं
शोचन्त्यां स्मरमित्रमेष हि मधुर्मध्वो भवंस्तन्मुदे ।
अद्वैतस्य समर्थकं शिवनयं त्वन्यायतो घर्षयं-
स्तन्मात्रेण कृतार्थतां प्रकटयन् स्वीयां चचारावनौ ।। इति ।

यदत्र मूलकृता नारायणः पुराणवाक्षु तप्तचक्राङ्कननिन्दां वीक्ष्यामर्षी जात इत्युक्तम्। तत्रेदानीं तदमर्षमूलकारणतप्तचक्राङ्कधारणनिषेधे प्रमाणानि उदाहरामः । तथाहि ब्रह्मयामलेऽरुणकं प्रति ब्रह्मोक्तिः -

नाभेरूर्ध्वं सोमपास्तु नाभ्यधस्तादसोमपाः ।
देवास्तिष्ठन्ति विप्रेन्द्रे वेदवेदाङ्गपारगे ।।
शिखा शिरो ललाटं च कर्णौ घ्राणं कपोलकम् ।
जिह्वायां च तथा चोष्ठौ चुबुकं कण्ठमेव च ।।
अंसद्वयं भुजद्वन्द्वं बाहुहस्तयुगे तथा ।
वक्षो नाभिं कटी लिङ्गं वृषणं चोरुजानुकम् ।।
गुल्फौ पादौ समाश्रित्य मदाद्याः सर्वदेवताः ।
पितरो मुनयश्चैव स्नानाद्याहारमिश्रितैः ।।
नित्यादिकर्मभिस्तृप्ता भवामो नात्र संशयः ।
एनं शप्त्वा पलायन्ते देवाः शीर्षादिवासिनः ।।



Scanned with CamScanner

पतितोऽयं भवत्येव शूद्रवच्चितिकाष्ठवत् ।
व्याधिं विना कर्मयोग्ये विप्राङ्गे चिह्नमीक्ष्य च ।।
लोकेश्वरं भानुमीक्षेदथवा ह्रदमाविशेत् ।
इत्येवं प्रोक्तवान् ब्रह्माऽरुणकेतुं प्रतीश्वरः ।। इति ।

मार्कण्डेयपुराणेऽपि -

ब्राह्मणानां च गायत्र्याः (५१) संवादोऽभून्महान्पुरा ।
अतस्तया तु संशप्ताः पाषण्डा भूमिदेवताः ।।
वेदोक्तकर्महीनाश्च तान्त्रिकाचारतत्पराः ।
भवतैवं कलौ यूयमिति तानाह सा रुषा ।।
अतः कलियुगे प्राप्ते भविष्यन्ति द्विजाधमाः ।
वेदार्थहीनाः पाषण्डाः लिङ्गचक्रादिचिह्निताः ।
ज्ञानकर्मपदभ्रष्टाः कामक्रोधादिपीडिताः ।।
दुरात्मानः सत्यधर्मवर्जिताः शापभागिनः ।
कलौ तु त्रिसहस्रान्ते पुनर्नष्टा भवन्ति ते ।।
निःशेषतां गताः पश्चादद्वैतार्थानुचिन्तकाः ।
सत्यधर्मरता भूयो भविष्यन्ति न संशयः ।। इति ।

बृहन्नारदीये -

यस्तु सन्तप्तशङ्खारिं लिङ्गचिह्नतनुर्नरः ।
स सर्वयातनाभोगी चण्डालः कोटिजन्मसु ।।
द्विजं तु तप्तशङ्खारिलिङ्गचिह्नतनुं नृप ।
सम्भाष्य रौरवं याति यावदिन्द्राश्चतुर्दश ।।
चक्राङ्कितनुर्यत्र तत्र कोऽपि न संवसेत् ।
यदि तिष्ठेन्महापापी सहस्रब्रह्महा भवेत् ।।
गङ्गास्नानरतो वापि अश्वमेधरतोऽपि वा ।
चक्राङ्कितततनुं दृष्ट्वा पश्येत्सूर्यं जपेन्नरः ।।
रौद्रं च पौरुषं सूक्तमन्यथा नरकं व्रजेत् ।



Scanned with CamScanner

चक्राङ्किततनुर्वापि राजन् लिङ्गाङ्कितोऽपि वा ।।
नाधिकारी स विज्ञेयः श्रौतस्मार्तादिकर्मसु । इति ।

तत्रैवान्यत्र -

लिङ्गाङ्किततनुं दृष्ट्वा शङ्खचक्राङ्कितं तथा ।।
स्नानमेव तदा कार्यमथवा सूर्यमीक्षयेत् ।
पतितं तप्तलिङ्गाढ्यं चक्राङ्कितमथापि वा ।।
वाङ्मात्रेणापि नार्चेत पाषण्डाचारतत्परम् ।
शूद्रवत्स परित्याज्यः पाषण्डाचारतत्पराः ।।
तस्मै दत्तं च हव्यं च कव्यं चापि वृथा भवेत् ।
तद्दर्शनात्परित्याज्यमन्नं मन्त्राभिमन्त्रितम् ।।
अपि शूद्रेक्षणाद्भुञ्जेल्लिङ्गचक्राङ्कितं विना ।
अपि चेन्निगमाचाररतो वेदान्ततत्परः ।।
लिङ्गचक्राङ्कमात्रेण स सद्यः पतितो भवेत् । इति ।

स्कान्दे शङ्करसंहितायामुपरिभागे -

शिवस्थानेषु सर्वेषु वारणस्यादिकेषु च ।
विपरीता भवेद् बुद्धिर्यस्य स्यात्स बहिर्नरः ।
दधीचिना गौतमेन ये शप्ता ब्राह्मणाधमाः ।।
कलाववतरिष्यन्ति निन्दकास्ते बहिर्नराः ।
राक्षसाः क्रूरकर्माणः पापाचारसमन्विताः ।।
कलाववतरिष्यन्ति निन्दकास्ते बहिर्नराः ।
ब्रह्मत्यासुरापानस्वर्णस्तेयकृतः पुरा ।। (५२)
बहिर्नरा भविष्यन्ति कलावीश्वरनिन्दकाः ।
न तैस्तु सह भाषेत न सहासीत चासने ।।
तेषां पङ्क्तौ न भुञ्जीत न तैः कुर्वीत बन्धुताम् ।।
प्रमादादर्चनाकाले पश्येद्यदि बहिर्नरम् ।।
प्रायश्चित्तेन महता शुद्धिमाप्नोति मानवः ।



Scanned with CamScanner

एतेषां दर्शने प्रायश्चित्तमष्टोत्तरं शतम् ।।
श्रीमत्पञ्चाक्षरीमन्त्रं जपेद्ध्यात्वा शिवं नरः ।
स्पृष्ट्वा बहिर्नरं स्नात्वा सचैलं शिवनिन्दकम् ।।
दत्वाथ भस्मताम्बूलं मद्भक्तानां तु भोजनम् ।
शङ्खचक्राङ्किताङ्गं च वैष्णवं शिवदूषकम् ।।
पश्येद्यदि प्रमादात्तु कुर्यात्पञ्चाक्षरीजपम् ।
तिलकं चतुरस्रं च दीपाश्वत्थदलाकृति ।।
शरीरे धारयेद्यस्तु न तं पश्येत्कदापि वा ।
दूषकानर्चनाकाले सर्वथा न विलोकयेत् ।।
प्रमादात्पश्यति यदि जपेत्पञ्चाक्षरीमनुम् । इति ।

मात्स्ये -

नाङ्कनं विग्रहे कुर्याच्चक्रशूलगदादिभिः ।
यदि कुर्याद् भयाल्लोभान्मोहाद्वापि पतत्यधः । इति ।

हेमाद्रौ प्रायश्चित्तकाण्डे पद्मपुराणे -

शृणु राम प्रवक्ष्यामि लिङ्गचक्रादिधारणम् ।
शूद्रधर्मरतानां हि तेषां नास्ति पुनर्भवः ।।
विप्रस्य तद्विगत्वात्प्रायश्चित्तमुदीरितम् । इति ।

ब्रह्मपुराणे दशमाध्याये -

तप्तमुद्राह्यन्त्यजाय हरिणा निर्मिता पुरा ।
भूदेवस्तप्तमुद्रां तु कृत्वा चिह्नं विमूढधीः ।।
इह जन्मनि शूद्रः स्यात्प्रेत्य श्वा च भविष्यति । इति ।

वायुपुराणे -

ब्राह्मणो यदि मोहेन तापयेद्वह्निमुद्रया।
न कर्मार्हो भवेत्तत्र स वै पाषण्डसंज्ञितः।। इति।

लिङ्गपुराणे-

शङ्खचक्रे तापयित्वा यस्य देहः प्रदह्यते।



Scanned with CamScanner

स जीवन् कुणपस्त्याज्यः सर्वकर्मबहिष्कृतः।। इति ।

आदित्यपुराणे -

वेदेषु यज्ञभागेषु यस्य नास्त्यधिकारिता ।
स तापयित्वा चक्रादीन् धारयेत्स्वभुजद्वये ।।
ब्राह्मणो यदि मोहेन धारयेत्तप्तमुद्रिकाः ।
तस्य दर्शनमात्रेण कुर्यात्सूर्यावलोकनम् ।। इति ।

स्कान्दे कलौ दानं प्रशस्यते इति निरूपणावसरे युधिष्ठिरं प्रति हरिवचनम् -

श्रुत्वार्जुनस्य तद्वाक्यं हरिर्धर्मात्मजं जगौ । इत्युपक्रम्य,
कन्याशुल्केन यत्पापं यत्पापं रुद्रविक्रये ।
यत्पापं चक्रचिह्नानां (५३) यत्पापं लिङ्गधारिणाम् ।।
तेषां दाने च यत्पापं पाषण्डत्वेन यद्भवेत् ।

इत्यादीन्युपन्यस्य,

एवमादीन्यनेकानि पापानि क्षितिमण्डले ।
तेषामपीह शुद्ध्यर्थं दानमुक्तं स्वयम्भुवा ।।
विद्यमानधनो यस्तु दानेऽस्मिन् विमुखो यदि ।
तस्यैव जन्मसंवृत्तिः सूकरेषु बहुष्विह ।।

इत्युपसंहृतम् । वह्निपुराणे -

पूर्वजस्य तनुं दग्ध्वा लिङ्गचक्रादिभिः पृथक् ।
न तस्य निष्कृतिर्दृष्टा स्नानदानजपादिभिः ।।
तस्य निष्कृतिरुत्पन्ना पाराशर्येण भाषिता ।
केशान् संवापयित्वाथ पुनः संस्कारमाचरेत् ।
गर्भगोलात्समुद्धृत्य गर्भाधानादिपूर्वकम् ।।
षष्ट्यावृत्त्यैव कृच्छ्राणां पायश्चित्तमुदीरितम् । इति ।

मानवोपपुराणे चतुर्दशाध्याये -

आयुधैः शङ्खचक्राद्यैर्न दहेच्च कदाचन । इति ।

प्रयोगपारिजाते विष्णुशातातपहारीतवचनान्युदाहृतानि। तथाहि विष्णुः-



Scanned with CamScanner

शङ्खचक्राद्यङ्कनं च गीतं नृत्यादिकं तथा ।
एकजातेरयं धर्मो न जातु स्याद् द्विजन्मनः ।।
यथा स्मशानजं काष्ठमनर्हं सर्वकर्मसु ।
तथा चक्राङ्कितो विप्रः सर्वकर्मबहिष्कृतः ।।
शङ्खचक्रे मृदा यस्तु कुर्यात्तत्पायसेन वा ।
स शूद्रवद्बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ।। इति ।

स एवाह -

इत्येतां तु ममानुज्ञां विलङ्घ्य विहगेश्वर ।
सर्वेषामङ्कनं कृत्वा मोहशास्त्रानुसारतः ।।
पतिष्यन्ति नरा घोरे नरके कलिसम्भवाः ।
तस्मादेतं न कर्तव्यमङ्कनं ब्राह्मणैः क्वचित् ।।
नाङ्कनं विग्रहे कुर्याद्वेदमार्गमुपाश्रितः ।
पुण्ड्रान्तरं भ्रमाद्वापि ललाटे नैव धारयेत् ।। इति ।

शातातपः -

अङ्गेषु नाङ्कयेद्विप्रो देवतायुधलाञ्छनैः ।
अङ्कयेद्यदि मोहात्तु पतत्येव न संशयः ।। इति ।

हारीतः -

रागसन्दग्धगात्रस्य न स्यात्पारत्रिकं शुभम् । इति ।

बोधायनः -

नाङ्कनेन दहेद्देहं दहेच्चेत्कामकारतः ।
नाधिक्रियन्ते दग्धाङ्गाः श्रौतस्मार्तेषु कर्मसु ।। इति ।

यमः -

नाङ्कनेन दहेद्गात्रं देवतायुधलाञ्छनैः ।
दहनाल्लेखनाद्वापि पातित्यं याति तत्क्षणात् ।। इति ।

कौर्मे -

न क्षतिं विग्रहे कुर्यादस्त्रशस्त्रनखादिभिः ।



Scanned with CamScanner

न लोहितं वपुः कुर्याद्यदि कुर्यात् पतत्यधः ।।
स्वदेहे परदेहे वा न कुर्यादङ्कनं नरः ।।(५४)
यदि कुर्यात्तु चक्राद्यैः पतत्येव न संशयः ।। इति ।

तत्रैव -

अज्ञात्वा मुखजेभ्यस्तु मुद्रादग्धेभ्य आदरात् ।
सुवर्णमात्रसङ्ग्राही प्राजापत्येन शुध्यति ।। इति ।

तत्रैव पूर्वार्धे सप्तविंशाध्याये -

वामाः पाशुपताचारास्तथा वै पाञ्चरात्रिकाः ।
भविष्यन्ति कलौ तस्मिन् ब्राह्मणाः क्षत्रियास्तथा ।। इति ।

तत्रैवोपरि भागे षोडशाध्याये -

पाषण्डिनो विकर्मस्थान् वामाचारांस्तथैव च ।
पाञ्चरात्रान् पाशुपतान् वाङ्मात्रेणापि नार्चयेत् ।। इति ।

तत्रैवैकविंशाध्याये श्राद्धवर्ज्यब्राह्मणप्रस्तावे -

बौद्धश्राविकनिर्ग्रन्थाः पाञ्चरात्रविदो जनाः ।
कापालिकाः पाशुपताः पाषण्डा ये च तद्विधाः । इति ।

सुरेश्वरोऽप्याह -

व्यासो नारददाल्भ्यशौनकशुका भीमाञ्जनेयार्जुना-
श्चक्राङ्कव्रणिताङ्गकाननुजगुर्जीवात्मभेदादिकम् ।
तस्मान्मूढमतिं विहाय सकलं पाषण्डचिह्नं त्यजन्
ब्रह्मास्मीति विभावनेन च सुखं गच्छाशु मोक्षं परम् ।।

इति । ननु -

शङ्खं वा शङ्खचक्रे वा तथा पञ्चायुधेन वा ।
धारयित्वैव विधिवद्ब्रह्मकर्म समारभेत् ।।
सुदर्शनं धारयित्वा वह्नितप्तं द्विजोत्तमः ।
उपनीय विधानेन तस्मात्कर्मसु योजयेत् ।।

इति विमतोदाहृतपाद्मवचनं तप्तचक्रादिधारणे लिङ्गमिति चेत् न, वचनस्यास्य नानादेशेभ्य



Scanned with CamScanner

आनीतपुस्तकेष्वदर्शनात् । अभ्युपेत्य वादेऽपि वा तन्त्रावलम्बिब्राह्मणाधिकारपरतया नेयत्वस्य युक्तत्वात् । न चैवं विमतोदाहृतवचने द्विजोत्तमशब्दो व्यर्थः स्यादिति वाच्यम् । द्विजोत्तमशब्दस्य क्षत्रियवैश्याभ्याम् उत्तमतया वेदाक्षरविहीनतन्त्रावलम्बिपरत्वमाश्वलायनस्मृतावुक्तम् ।

शिवकेशवयोश्चिह्नं शूलचक्रादिकं द्विजः ।
न धारयेत मतिमान्वैदिके वर्त्मनि स्थितः ।।
त्यक्तवैदिककर्माणो नास्तिका नटनर्तकाः ।
ते धारयेयुश्चिह्नानि शिवयोर्भिन्नबुद्धयः ।
वेदाक्षरविहीनानां नास्तिकानां द्विजन्मनाम् ।
विहितं धारणं नित्यं चिह्नानां केशवेशयोः ।
तेषां भिन्नधियां किञ्चित्सुगत्यर्थं शिवः पुरा ।।
कृपया तच्चकारेह पुराणेषूदितं च तत् । इति ।(५५)

तदिति - किञ्चित्तन्त्रमित्यर्थः । इहेति - स्मृतिष्वित्यर्थः । चकारो भिन्नक्रमः । पुराणेषु चेति योज्यम् । स्मृतिपुराणयोरपि क्वचित्तन्त्रसमानविषयत्वं पराशरोपपुराणे स्पष्टीकृतम्।

क्वचित्कदाचित् स्मर्तारस्तन्त्रार्थं (प्र)ब्रुवन्ति च ।
क्वचित्तन्त्रानुरोधेन धर्मं पौराणिका अपि ।
वदन्ति तादृशोंऽशश्च ग्राह्यस्तन्त्रावलम्बिना ।। इति ।

स्कान्देऽपि -

तन्त्रावलम्बिने नैव पुराणानि च कानिचित् ।
साक्षाद्वेदविरुद्धार्थं प्रवदन्ति क्वचित् क्वचित् ।।
अधिकारिविभेदेन नैव वेद परं प्रति ।।

अधिकारीति - भ्रष्टाधिकारीत्यर्थः । इयता प्रबन्धेन वेदाधिकारिणां तप्तमुद्रानिषेधकानि तद्धारणे प्रायश्चित्तविधायकानि प्रायश्चित्ताकरणे नरकादिबाधकानि च प्रदर्शितानि । इदानीं तन्त्रनिर्माणप्रयोजनं तन्त्राधिकारिणश्च दिङ्मात्रं प्रदर्शयामः । अत्रायं सिद्धान्तः -

शापाद्वा गौतमादीनां पापाद्वा मोहतो नराः ।
ये गता वेदबाह्यत्वं ये च सङ्कीर्णयोनिजाः ।।
तेऽधिक्रियन्ते तन्त्रादौ स्त्रीशूद्राश्च यथायथम् । इति ।



Scanned with CamScanner

कौर्मे पञ्चदशाध्याये -

तेषां मायावशाज्जातं गोवधं गौतमो मुनिः ।
केनापि हेतुना ज्ञात्वा शशापातीव कोपनः ।।
भविष्यथ त्रयीबाह्या महापातकिनः शठाः ।
बभूवुस्ते तथा शापाज्जायमानाः पुनः पुनः ।।

इत्यादिना गौतमशापान्प्रस्तुत्य,

सर्वे सम्प्राप्य गौरीशं शङ्करं विष्णुमव्ययम् ।
अस्तुवंल्लौकिकैः स्तोत्रैः

इत्यादिना शिवकेशवसन्निधौ तेषां गतिप्रार्थनां प्रदर्श्य -

तस्माद्वै वेदबाह्यानां रक्षणार्थं च पापिनाम् ।
विमोहनाय शास्त्राणि करिष्यामो वृषध्वज ।।
एवं सम्बोधितो रुद्रो माधवेन मुरारिणा ।
चकार मोहशास्त्राणि केशवोऽपि शिवेरितः ।।
कापालं गारुडं शाक्तं भैरवं पूर्वपश्चिमम् ।
पाञ्चरात्रं पाशुपतं तथान्यानि सहस्रशः ।।

इत्युक्तम् । अत्र भ्रष्टानां गतिप्राप्तये आगमप्रणयनैरपि तत्र तत्र प्ररोचनार्थे चतुर्षु वेदेषु परं पुरुषार्थमलभमानः शाण्डिल्य इमां विद्यामधीतवानित्यादिक्रमेण तन्त्राणां वैदिकमार्गादाधिक्यं(५६) बहुधा वर्णितमित्येतावता विमोहनायेत्युक्तिः। तथा स्कान्दे गौतमशापोऽपि दर्शितः -

पाञ्चरात्रे च कापाले तथा कालमुखेऽपि च ।
शाक्ते च दीक्षिता यूयं भवत ब्राह्मणाधमाः ।।
बौद्धे चार्हन्मते चैव तथा पाशुपतेऽपि च ।

इत्यादिना । ब्रह्मशापस्तु पराशरपुराणे दर्शितः -

आयुधैः शङ्खचक्राद्यैस्त्वदीयैरङ्किता जनाः ।
अग्नितप्तैर्महामोहाद्भवेयुश्चांसयोर्द्वयोः ।।
त्वदीये पाञ्चरात्रे च तथा भागवतेऽपि च ।
दीक्षिताश्च द्विजा नित्यं भवेयुर्गर्हिता हरे ।।



Scanned with CamScanner

इत्यादिना। भृगुदधीचिशापावपि सौरपुराणादिषु द्रष्टव्यौ । तथा पापविशेषस्यापि तन्त्रमार्गप्रवेशहेतुत्वं पाराशरे दर्शितम् -

शङ्खचक्रगदापद्मशूलवज्राङ्कुशादिभिः ।
अङ्किताश्च भविष्यन्ति मनुष्याः पापकर्मिणः ।।
पाञ्चरात्रे च कापाले पाषण्डेष्वखिलेषु च ।
दीक्षिताश्च भविष्यन्ति मनुष्याः पापकर्मिणः ।। इति ।

लैङ्गे नवमाध्याये -

अङ्किताश्च भविष्यन्ति देवतायुधलाञ्छनैः ।
नराश्च पापकर्माणो युगान्ते समुपस्थिते ।।
पाञ्चरात्रं प्रशंसन्ति केचिद्भागवतं मुने ।
केचित्कापालमिच्छन्ति केचित्पाशुपतं मुने ।।
केचिद्बौद्धं प्रशंसन्ति केचिद्दैगम्बरं मुने ।
अन्यापि यानि शास्त्राणि विरुद्धानि महामुने ।।
स्वतः प्रमाणभूतेभ्यो वेदेभ्यो मुनिसत्तम ।
तान्येव श्रद्धया युक्ताः परिगृह्य द्विजातयः ।।
आचरन्ति महाभाग युगान्ते समुपस्थिते ।
श्रुतिभ्रष्टः स्मृतिप्रोक्तप्रायश्चित्ते भयं गतः ।।
क्रमेण श्रुतिसिद्ध्यर्थं मनुष्यस्तन्त्रमाश्रयेत् ।
धर्मशास्त्रे पुराणे च प्रोक्तं हि मरणान्तिकम् ।।
प्रायश्चित्तं मनुष्याणां पापिष्ठानां सुदारुणम् ।
भयं दुर्बलचित्तानां मरणाज्जायते भृशम् ।।
तेषामेवाभिरक्षार्थं खल्वहं तन्त्रमुक्तवान् । इति ।

तथा तत्रैव -

पाञ्चरात्रं भागवतं तथा वैखानसाभिधम् ।
वेदभ्रष्टान् समुद्दिश्य कमलापतिरुक्तवान् ।। इति ।

सूतसंहितायाम् -



Scanned with CamScanner

अत्यन्तस्खलितानां हि द्विजानां वेदमार्गतः ।
पाञ्चरात्रादयो मार्गाः कालेनैवोपकारकाः ।। इति । (५७)

तथा तत्रैव चरमाध्याये -

श्रुतिपथगलितानां मानुषाणां हि तन्त्रं
हरिरपि हरमुख्याः प्राह तन्त्रे स्वकीये ।
श्रुतिपथनिरतानां तन्न संसेवनीयं
श्रुतिपथसममार्गो नैव सत्यं मयोक्तम् ।। इति ।

तथा सङ्करजातीनामेव तन्त्रेष्वधिकारः कौर्मे द्वाविंशाध्याये दर्शितः -

अथांशोः सात्वतो नाम विष्णुभक्तः प्रतापवान् ।
महात्मा दाननिरतो धनुर्वेदविदां वरः ।।
स नारदस्य वचनाद्वासुदेवार्चने रतः ।
शास्त्रं प्रवर्तयामास कुण्डगोलादिभिः श्रितम् ।।
तस्य नाम्ना तु विख्यातं सात्वतं नाम शोभनम् ।
प्रवर्तते महाशास्त्रं कुण्डादीनां हितावहम् ।। इति ।

चक्रधारणस्य स्त्रीशूद्राधिकारिपरता सात्वतोक्तेति भागवते दशमस्कन्धे दर्शितम् -

तेनोक्तं सात्वतं तन्त्रं यज्ज्ञात्वा मुक्तिभाग्भवेत् ।
यत्र स्त्रीशूद्रदासानां संस्कारो वैष्णवः स्मृतः ।।

इत्यलम् ।। ३ ।। मूलम् -

**प्रमाणहीनं मणिमञ्जरीति ग्रन्थं व्यधात्सोऽयमनल्पमूढः ।**
**मध्वस्तुतिश्रीगुरुशङ्करार्यनिन्दावहं पामरलोकतुष्ट्यै ।। ४ ।।**

पूर्वश्लोके नारायणो नाम माध्वः पुराणेभ्यः शङ्कराचार्यप्राशस्त्यं मध्वविषयकाप्राशस्त्यं च विज्ञाय सासूयो जात इत्युक्तम् । सम्प्रति तन्निन्दावहनिष्प्रमाणकग्रन्थमपि स व्यतानीदित्याह - प्रमाणेति । अनल्पमूढः - वित्ताशासन्त्यक्तस्वमताचारवत्तयाऽधिकतरमूर्खः । सोऽयं नारायणः प्रमाणैरुपबृंहकपुराणादिभिर्हीनं शून्यम् । स्वकपोलकल्पितत्वादिति भावः । मध्वस्तुतिश्रीगुरुशङ्कराचार्यनिन्दयोराहवम् - आपादकं मणिमञ्जरीति ग्रन्थं पामरलोकतुष्ट्यै - नीचजनसन्तोषाय। विवर्णः पामरो नीचः इत्यमरः । व्यधाद् अकरोत् । अत्रोदाहर्तव्यापि मणिमञ्जरी नोदाहियते।



Scanned with CamScanner

Scanned with CamScanner

यस्याश्च लेखनमपि महानिरयापादकतयाऽवभासते । श्वारावमनुकुर्वतः परिपाटीमनुकुरुते च। न हि परेणोन्मस्तकं प्रलपितमित्यस्माभिरपि तथा कर्तव्यम् ।

स्यादेतत् - प्रमाणाभावेऽपि (५८) युक्तियुक्ता चेत्, युक्त्यन्तरैः खण्डनाय वा सा लेखनपदवीमधिरुह्यात् । न हि मधुदेवनमत्ततदीयग्रन्थे युक्तिलेशोऽप्युपलभ्यते, येन लेखनपदवीमधिरुह्यात्(गच्छेत्) । नापि प्रेक्षावत्प्रत्यवबोधार्थमपि सा युज्यते लिखितुम् । तदीयपरमरहस्यावबोधनेन भवितव्यसत्फलाभावात् । अन्ततो गुरुनिन्दाश्रवणजनितमहापातक पात्रत्वापत्तेश्च ।

ननु - भवत्समारम्भस्याप्येतादृशत्वेनोक्तहेतुद्वयं दुर्वारमेव भवतामिति चेत्, शृणु - न वयं परेषां निन्दनाय प्रवृत्ताः । किन्तु मध्वोत्पत्तिविषये पुराणानां विसंवादे प्रसक्ते तदैककण्ठ्यप्रतिपादनाय, येनास्मान् परकर्मकनिन्दा संस्पृशेत् । न चैवं पुराणविरोधः परिह्रियताम्, किमन्यदीयसाङ्गोपाङ्गचरित्रकथनेनेति वाच्यम् । विरोधपरिहारमात्रेण परमतसौष्ठवप्रतीत्या क्वचित्तन्मते प्रेक्षावतां प्रवृत्त्यापत्तौ तन्निवारणाय पुराणप्रसिद्धस्य परमतदौष्ट्यस्य मुख्यतया निरूपणीयत्वात् । न चैवं पुराणेषु मध्वमतं प्रयुक्तम्, येन मध्वमधिकृत्य पुराणानि प्रवृत्तानीति निश्चेतुं शक्येत, येन वा भवदीयः पुराणविरोधपरिहारप्रवृत्तिसमारम्भः सङ्घटतामिति वाच्यम्। पुराणेषु तत्संस्पर्शकवचनसत्त्वात् । तथा हि सौरपुराणे चत्वारिंशेऽध्याये कलिधर्मनिरूपणावसरे सूत उवाच -

ततः कलियुगे प्राप्ते सर्वधर्मबहिष्कृते ।
मधुनामा तु विधवाक्षेत्रे जाराद्भविष्यति ।।
गोलकः स तु पापिष्ठः पद्मपादुकमीश्वरम् ।
अद्वैतवेदान्तरतं गुरुत्वेनार्चयिष्यति ।।
शास्त्रं पूर्णं ततोऽधीत्य स्थित आह्निकवर्जितः ।
किमग्निहोत्रं को यागो हेतुमेवं करिष्यति ।।
गुरुराकर्ण्य तद्वाक्यं ब्राह्मणो न भवेदयम् ।
इति निश्चित्य तं दुष्टं वक्ष्यति श्रुततद्वचाः ।

गुरुः -

को वर्णस्तव रे ब्रूहि यथार्थं वेददूषक ।



Scanned with CamScanner

त्वन्माता केन दत्ता रे कस्य पुत्री कदा कथम् ।।
कस्मै दत्ता च विधिना केन तद्ब्रूहि मा चिरम् ।

मधुः -

विधवा जननी नाथ ब्राह्मणेन च केनचित् ।
गर्भिणी(५९) समभूत् स्वामिन् ! अयं देहस्ततोऽभवत् ।।

गुरुः -

कपटेन यतः शास्त्रं मत्तोऽधीतं त्वयाधुना ।
तेन सिद्धान्तमर्यादा कदाचिन्मा स्फुरत्वियम् ।।

सूतः -

मधुनामा ततः प्राप्य शापं तं दुष्टबुद्धिमान् ।
मध्वाचार्यस्ततो भूत्वा दाक्षिणात्यो महाकलौ ।।
बादरायणसूत्राणां व्याख्यानं च करिष्यति ।
यथा यथा कलेर्घोरः प्रचारो हि भविष्यति ।।
शिष्योपशिष्यसंयुक्तो हेतुवादं करिष्यति ।
तत्त्वं संसार इत्येव न बाध्यः सत्य एव हि ।।
वदत्यतस्तत्त्ववादी मिथ्यावादी स इष्यते ।
मिथ्याभूतः प्रपञ्चोऽयं मायानिर्मित इष्यते ।।
मायावादिन इत्येते वस्तुतस्तत्त्ववादिनि । इति ।

अत्र च साक्षान्मध्वाचार्यपदमेव निवेशितम् । किञ्च स्कान्दे केदारखण्डे -

कारयिष्यन्ति पुण्ड्राणि वेणुपत्राकृतीनि च ।

इत्युक्तम् । पराशरसंहितायाम् -

दीपाश्वत्थदलाकारतिलकादीन् करिष्यति ।

इति निरूपितम् । सौरपुराणे -

तप्तारिलाञ्छनं धत्ते तिलकं पद्मसन्निभम् ।

इत्युपन्यस्तम् । शङ्करसंहितायां स्कान्दे -

तिलकं चतुरस्रं च दीपाश्वत्थदलाकृति ।



Scanned with CamScanner

शरीरे धारयेद्यस्तु न तं पश्येत् कदापि वा ।।

इति प्रतिपादितम् । एतानि वचनान्येतत्सर्गीयतृतीयश्लोकव्याख्यायां मध्वविचित्र चरित्रनिरूपकतया समुदाहृतेषु स्कान्दपराशरसंहितासौरपुराणेषु द्रष्टव्यानि । एतत्पुराणोक्तलक्षणलक्षितपुण्ड्रधारणं तु माध्वेषु दृष्टमिति । क्रोध-मूक-मधु- पदान्युच्चार्य कथाप्रतिपादकस्कान्दपराशरसंहितासौरपुराणेषु तत्तत्पदैस्तन्मतकूट स्थं मध्वमध्यक्षयामः । क्रोधांशो मध्व इति स्कान्देन, मूकदानव इति पराशरसंहितया, मधुरिति सौरपुराणेन चावगम्यते। मधुनो मध्व इत्येषा प्रक्रिया वैदिकीरिता । तत्र परशुरामशप्तक्रोधस्यावस्था विशेषा मूक-मधु-मध्वा इति निरूपणमुखेन पुराणविरोधः परिह्रियते मूलकारेणेति ज्ञेयम् । न च स्वार्थसाधकत्वेन विमतकथानिरूपणमनर्थकमिति वाच्यम् । शङ्करावतारान्तरविद्यारण्यगुरुसार्वभौमविरचितविमतविजयवर्णनप्रसङ्गसङ्गत मध्ववृत्तान्तस्य (६०) निरूपणीयत्वात् । न च मध्वो न विजित इत्यानर्थक्यं शङ्क्यम् । माध्वविजयतो बुद्ध्यारूढस्य मध्वस्य तत्सिद्धान्तनिराकरणायोपादानादित्यलं पृथक्जनस्मरणेन ।। ४ ।।

मूलम् -

**पुराणवीक्षालसमानसानां सङ्क्षेपतस्तत्त्वविबोधनाय ।**

**माणिक्यमञ्जर्यभिधः प्रबन्धो विरच्यते श्रीरघुनाथनाम्ना ।। ५ ।।**

व्याख्या - एवं मणिमञ्जर्यामादरशालिनां जनानां निवारयितुं निष्प्रमाणत्वमुपन्यस्य सम्प्रति पुराणप्रतिपादितार्थानुवादकत्वेन स्वग्रन्थस्य सप्रमाणत्वं निरूपयन् करिष्यमाणग्रन्थनामकथनपूर्वकं प्रतिजानीते - पुराणेति । पुराणानां वीक्षायाम् - अवलोकने अलसं मानसं येषां तेषाम्, जनानाम् इत्यध्याहारः । सङ्क्षेपतः, तत्त्वस्य पुराणरहस्यस्य, विबोधनाय, श्रीमता रघुनाथनाम्ना विदुषा माणिक्यमञ्जर्यभिधो माणिक्यमञ्जरीनामकः प्रबन्धो ग्रन्थः विरच्यते क्रियते ।। ५ ।। मूलम् -

**शिवात्मकश्रीगुरुशङ्करार्यलीलावतारप्रतिपादकोऽयम् ।**

**माणिक्यमञ्जर्यभिधप्रबन्धस्तनोतु तोषं विदुषां नितान्तम् ।। ६ ।।**

व्याख्या - मध्वप्रधानकत्वभ्रमनिवारणाय ग्रन्थप्रतिपाद्यमुख्यार्थकथनपूर्वकं विद्वत्तोषमाशास्ते - शिवेति । शिवात्मकस्य शिवरूपस्य श्रीगुरोः शङ्करार्यस्य, ये लीलावतारास्तेषां प्रतिपादकः, माणिक्यमञ्जर्यभिधः अयं प्रबन्धः, विदुषां पण्डितानाम्, नितान्तम् अधिकम्, तोषम् - सन्तोषम्, तनोतु - रचयतु ।। ६ ।। मूलम् -



Scanned with CamScanner

**क्रोधं वदन्त्येकममुं पुराणं मूकाभिधं दानवमन्यदाह ।**

**ब्रूते पुराणेषु मधुं किलान्यल्लोकोत्तरस्कान्दमुखेषु मध्वम् ।। ७ ।।**

व्याख्या- यदंशोऽयं मध्वस्तद्विषयकपुराणानां विसंवादमाह क्रोधमिति। लोकोत्तरेषु लोकपूज्येष्वित्यर्थः । स्कान्दमुखेषु पुराणेषु(६१) एकं स्कान्दाख्यं पुराणम्, कर्तृ । अमुं मध्वम्, क्रोधं - क्रोधांशम्, वदति । स्कान्दमुदाहृतं तृतीयश्लोकव्याख्यायाम् । तस्यायं संग्रहश्लोकः -

सन्देशात्कलिभूपतेः प्रकटयन् यो विष्णुपाषण्डतां
क्रोधो मध्वयतिर्भवन् क्षितितले द्वैतं जगौ मूढधीः ।
हित्वानादिवचांस्ययं श्रुतिपुराणादीन् वितन्वन् स्वयं
विप्रान् मोहयति स्म भूमिवलये तप्तारिधृत्यादिभिः ।। इति ।

अन्यत् पराशरसंहितारूपम् निबन्धनम्, अमुं मध्वम् मूकाभिधदानवम् आह वक्ति। पुराणं च तृतीयश्लोकव्याख्यायां द्रष्टव्यम्। तस्यायं संग्रहश्लोकः -

धृत्वा कैरातवेषं मनसिजरिपुणा दानवो मूकनामा
रक्षार्थं पाण्डुसूनोः कपटकिटिवपुर्यो हतः पूर्वमद्रौ ।
सोऽयं पाषण्डवादी समजनि तुलवः क्रोधनो मध्वनामा
भर्गे मात्सर्यबुद्धिर्धरणितलगतो भेदवादान् जजल्प ।। इति ।

अन्यत् सौरपुराणम्, अमुं - मध्वम्, मधुम् - वसन्तांशं ब्रूते - वक्ति । पुराणं च तृतीयश्लोकव्याख्यायामुदाहृतम् । तस्यायं संग्रहश्लोकः -

ध्वस्ते शम्भुललाटनेत्रशिखिना कान्ते रतौ केवलं
शोचन्त्यां स्मरमित्रमेष हि मधुर्मध्वो भवंस्तन्मुदे ।
अद्वैतस्य समर्थकं शिवनयं त्वन्यायतो घर्षयं-
स्तन्मात्रेण कृतार्थतां प्रकटयन् स्वीयां चचारावनौ ।।

इति ।। ७ ।। मूलम् -

**एकार्थतायां प्रतिपादितायां तेषां विरोधो न भविष्यतीति ।**

**बुधस्तुतोऽयं रघुनाथविद्वान् वक्तुं कथामारभते मनोज्ञाम् ।। ८ ।।**

व्याख्या - यदर्थोऽयमारम्भस्तत्प्रतिजानीते एकार्थतायामिति । एकोऽर्थो वाच्यो येषां क्रोधमूकमधुशब्दानां तेषां भावस्तत्ता तस्याम्, प्रतिपादितायां सत्यां मूकमधुमध्वानां



Scanned with CamScanner

क्रोधावस्थाविशेषत्वेन क्रोधमूकमधुशब्दा मध्वपर्याया इति निरूपितायां सत्यमित्यर्थः । ततश्च क्रोधमधिकृत्य प्रवृत्तं स्कान्दम्, मूकदानवमधिकृत्य(६२) प्रवृत्ता पराशरसंहिता, मधुमधिकृत्य प्रवृत्तं सौरपुराणं च मध्वमेवाध्यक्षयतीति फलितम् । एवं सति तेषां पूर्वोदाहृतस्कान्द पराशरसंहितासौरपुराणानां विरोधः न भविष्यति इति मत्वेत्यर्थः। मत्वेत्यस्येति नैकगम्यमानार्थत्वादप्रयोगः । प्रयोगे वा पौनरुक्त्यम् इति वामनः । बुधस्तुतः अयम् रघुनाथनामा विद्वान् - पण्डितः, मनोज्ञां शङ्कराचार्यकथावत्तया मनोहराम्, कथाम् अवतारकथाम्, वक्तुमारभते - उपक्रमते । पुराणसन्दर्भशुद्ध्यर्थमिति भावः । अत्रायमेतद्ग्रन्थगतसर्गचतुष्टयप्रतिपाद्य कथोपोद्घातश्लोको मामकीनः -

रक्षस्त्वापकजामदग्न्यवचनात्क्रोधस्तु मूकोऽभवद्
वाराह्या विजयाश्रमं गतममुं तन्वा किरातोऽवधीत् ।
प्रापत्सन्मधुरेष काममथ तं तिष्यं स निन्ये गिरा
सन् मध्वोऽस्य निनिन्द शङ्करमतं तत्तत्स विद्यावनः ।। इति ।

अस्यायमर्थः - क्रोधः रक्षस्त्वापकजामदग्न्यवचनात् - राक्षसत्वप्रापकपरशुरामशापात्, मूको मूकासुरः अभवत् - बभूव । अथानन्तरम् वाराह्या वराहसम्बन्धिन्या तन्वा शरीरेण, विजयाश्रमं इन्द्रकीलपर्वते तपस्यतोऽर्जुनस्याश्रमं गतम् - प्राप्तम् अमुम् मूकदानवम् किरातः शिवांशो व्याधः अवधीत् सञ्जहार । अथ वराहसंहारानन्तरम्, एषः वराहरूपस्य मूलभूतो मूकासुरः मधुर्वसन्तः सन् कामम् मन्मथम् प्रापत् अगमत् । अथ मन्मथप्राप्त्यनन्तरम्, स मन्मथः तं - मधुं, तिष्यम् कलिम्, निन्ये - निनाय । तिष्यः पुष्ये कलियुगे इत्यमरः । अथानन्तरम्, स मधुः, अस्य कलेर्गिरा वचनेन, मध्वः सन् शङ्करमतम् शिवांशसम्भूतशङ्कराचार्याद्वैतमतमित्यर्थः । बिभेद भेदितवान् । अथ शङ्कराचार्यः। विद्यावनो विद्यारण्यः सन् तस्य तत् तत्तत् मध्वद्वैतमतं चिच्छेद इति । क्रोधस्य राक्षसत्वं तु स्कन्दगतनारदवचनादवगम्यते । तच्च स्कान्दम् - क्रोधः समेऽनर्थपरम्पराया दाता इति वक्ष्यमाणैतत्सर्गीयपञ्चदशश्लोक व्याख्यायामुदाहरिष्यते।(६३) तत्र मूलोक्तिदार्ढ्यायावश्यकत्वात् तत्र प्रथमे क्रोधस्य मूकात्मनाविर्भावो मधुरूपप्राप्तिश्च निरूप्यते । द्वितीये शिवात्मक शङ्करभगवत्पादविजयः कीर्त्यते । तृतीये मधोर्मध्वात्मनाऽऽविर्भावस्तद्दौरात्म्यं च कथ्यते । चतुर्थे सर्गे शङ्करावतारान्तरविद्यारण्यकृतमाध्वमतखण्डनपूर्वकसुवर्णवृष्ट्यादिकथा निरूप्यत



Scanned with CamScanner

इति संक्षेपः ।। ८ ।। मूलम् -

**पुरा धरायामतिनिन्द्यभूमिपालेन्द्रराजीरचितश्रमायाम् ।**

**तादृग्धरानाथगणान्निहन्तुं पुमान्पुराणश्चकमे रमेशः ।। ९ ।।**

व्याख्या - क्रोधस्य राक्षसत्वप्राप्तिकारणं विवक्षुः परशुरामकथामाह सप्तभिः श्लोकैः। पुरेति । पुराणः पुमान् रमेशः धरायाम् - भूम्याम्, अतिनिन्द्यानां भूमिपालेन्द्राणां राज्या - पंक्त्या, रचितश्रमो यस्यास्तथोक्तायां सत्याम् तादृशश्रमापादकत्वेन सिद्धान् धरानाथगणान् निहन्तुम् - संहर्तुं, चकमे - इयेष। कमु कान्तौ कर्तरि लिट् कान्तिरिच्छा इति दीक्षितचरणाः ।। ९ ।।

मूलम् -

**भृगोः सुतत्वं समुपेत्य विष्णूरामात्मना ख्यातिमुपेत्य लोके ।**

**क्रोधात् क्षितीशान्निखिलान्निहत्य लब्धामिमां भूमिमदाद् द्विजेभ्यः ।। १० ।।**

व्याख्या - भृगोरिति। विष्णुः भृगोः सुतत्वम्- गोत्रापत्यत्वं, समुपेत्य - भृगुवंशसम्भूतजमदग्निसुतो भूत्वेत्यर्थः । रामात्मना - परशुरामात्मना लोके ख्यातिम् - प्रसिद्धिं, उपेत्य - प्राप्य, निखिलान् क्षितीशान् क्रोधात् निहत्य लब्धमिमां भूमिं द्विजेभ्यः अदात् दत्तवान्। पुरा किल जमदग्निः स्वाश्रमं गतं ससैन्यं कार्तवीर्यार्जुनं कामधेनुपुत्रीसहायेन सदकरोत् । स च कार्तवीर्यो विफलीभूतगोविषयकप्रार्थनतया रोषपरवशस्तां धेनुमजीहरत्।(६४) ततो जमदग्निः पुत्रं परशुराममाहूय धेनुमानयेत्युवाच । स च रामो राजानं कार्तवीर्यं युद्धमन्तरेणाजय्यं मन्वानो धृतचापबाणस्तत्पुरमुपेत्य योद्धुं तमाह्वयत् । ततो ब्राह्मणवटुरयमिति सामोक्तिभिः सान्त्वनाय राजा मन्त्रिप्रमुखान् प्राहिणोत् । स च रामः सर्वानपि प्रहितान् सञ्जहार। ततस्तदाकर्ण्य समागत्य योद्धुमारभमाणं सहस्रबाहुं कार्तवीर्यार्जुनं निहत्य निर्वृत्तं वृत्तं पित्रे निवेद्य राजहननजनितपापोपशमनाय पित्रुपदिष्टं तीर्थयात्रार्थमगात् । ततः पितृहननसमेधमानवैरं कार्तवीर्यपुत्रसहस्रं जमदग्निमवधीत् । अस्मिन्नन्तरे तीर्थयात्रां समाप्य समागतो रामः पितृघातकान् कार्तवीर्यपुत्रान्निहत्य मार्गं मार्गं क्षत्रियकुलं संहरन् तद्रक्तेन पितृतर्पणमकार्षीत् । स्वायत्तां वसुधां द्विजेभ्यः प्रायच्छच्चेति पौराणिकी गाथात्रानुसन्धेया । वचनानि तु पुराणतोऽवगन्तव्यानि ।। १० ।। मूलम् -

**तेऽप्येवमूचुस्तमुपेत्य विप्रा न राम वस्तव्यमिह त्वयोर्व्याम् ।**

**त्वद्दत्तभूम्यां त्वयि वर्तमाने दत्तापहारीति निगद्यसे त्वम्।। ११ ।।**



Scanned with CamScanner

व्याख्या - त इति । ते विप्रा अपि ब्राह्मणास्तु तं रामं उपेत्य - प्राप्य, एवम् - वक्ष्यमाणप्रकारेण, ऊचुः । तद्वचनमाह - नेत्यादिना । हे राम, इह अस्याम्, उर्व्याम् - भूम्याम्, त्वया न वस्तव्यम् - न स्थातव्यम् । कुत इति चेत्तदाह - त्वद्दत्तेति । त्वया दत्तायां भूम्याम् त्वयि वर्तमाने - विद्यमाने सति, त्वं दत्तापहारीति निगद्यसे - भाष्यसे । जनैरिति शेषः। इत आरभ्य श्लोकपञ्चके यानि प्रमाणान्यपेक्षणीयानि तानीतः पञ्चमस्य, क्रोधः स मेऽनर्थपरम्पराया दाता इति श्लोकस्य व्याख्यायामुदाहरिष्यामः ।। ११ ।। मूलम् -

**रामस्तदाकर्ण्य वचो द्विजानां विस्मित्य सम्प्राप्य समुद्रमुर्वीम् ।**
**वस्तुं ययाचे निधिरम्भसां तु रामाय तस्मै धरणीमदत्त ।। १२ ।।**

(६५)व्याख्या - राम इति । रामः द्विजानां तत् वचः आकर्ण्य विस्मित्य - आश्चर्यं प्राप्य, स्मयतेरघोपदेशत्वान्न षः । समुद्रं सम्प्राप्य, वस्तुं - वासं कर्तुं, उर्वी - भूमिम्, ययाचे - याचितवान् । अम्भसां निधिः - समुद्रस्तु तस्मै रामाय धरणीमदत्त - दत्तवान् ।। १२ ।। मूलम्-

**तद्दत्तभूम्यां भगवानुषित्वा प्राप्ता मया सम्प्रति या वनान्ते ।**
**यन्मूलिकानर्थपरम्परेयं शोध्यं तदद्येति मनस्यकार्षीत् ।। १३ ।।**

व्याख्या - तदिति । भगवान् - षड्गुणैश्वर्यसम्पन्नो रामः । तेन - समुद्रेण, दत्तायां भूम्यामुषित्वा - वासं कृत्वा, वसतेः क्त्वाप्रत्यये सम्प्रसारणे वसतिक्षुधोरिडितीट् । वनान्ते - वनमध्यदेशे, या अनर्थपरम्परा मया प्राप्ता भवति इयमनर्थपरम्परा यत् मूलं यस्याः सा तथोक्ता, स्यात् अनर्थपरम्परामूलम् अद्य शोध्यम् - विचारणीयमिति यावत् । इति मनसि - अकार्षीत् - कृतवान् ।। १३ ।। मूलम् -

**वर्णाश्रमाचारविभेददक्षक्षुद्रक्षमानाथगणान्वितायाम् ।**
**मह्यां मया लोकहिताय येन क्रोधेन सर्वे निहता महीशाः।।१४।।**

व्याख्या - सार्धश्लोकेनानर्थमूलं रामो निरचिनोदित्याह - वर्णेति । मह्याम् वर्णाः ब्राह्मणादयः, आश्रमाः ब्रह्मचर्यादयः, तेषां विभेदे नाशने इत्यर्थः । दक्षाणां - समर्थानां क्षुद्राणां क्षमानाथानां गणैः - समूहैरन्वितायां सत्याम्, मया कर्त्रा लोकहिताय येन क्रोधेन करणेन सर्वे महीशा राजानः निहताः संहताः आसन्निति शेषः ।। १४ ।। (६६) मूलम् -

**क्रोधः समेऽनर्थपरम्पराया दातेति निश्चित्य भृगोः कुमारः ।**
**शशाप तं क्रोधममुं स रामस्त्वं राक्षसो घोरतरो भवेति ।। १५।।**



Scanned with CamScanner

व्याख्या - क्रोध इति । भृगोः कुमारः स रामः येन क्षितीशा मया निहताः स क्रोधः मे - मह्यम् अनर्थपरम्परायाः दाता इति, निश्चित्य तममुम् क्रोधं शशाप - शप्तवान्। शापप्रकारमाह त्वमिति। हे क्रोध, त्वम् घोरतरः - क्रूरतरः राक्षसः भव इति शशापेति सम्बन्धः । परशुरामस्य क्षत्रियविषयकक्रोधोत्पत्तौ पुराणोक्तं कारणं तदीयकथानिरूपणमुखेन दशमश्लोकव्याख्यायां निरूपितम्। सम्प्रति क्रोधस्य परशुरामशापे पुराणमुपपादयामः । तथा हि, स्कान्दे सदृष्टान्तं कामक्रोधादीनामनर्थहेतुत्वनिरूपणावसरे नारदेन -

क्रोधेन जामदग्न्योऽपि महानर्थमुपागमत् ।

इत्युपक्रम्योक्तम् -

क्रोधाविष्टो जामदग्न्यः क्षुद्रक्षत्रियनाशनम् ।।
कृत्वा प्राप्तां महीं सर्वां ब्राह्मणेभ्यो ददौ मुदा ।
ते सम्मन्त्र्य द्विजाः सर्वे समागत्य भृगोः सुतम् ।।
महीतलमिदं सर्वमस्मभ्यं भवतार्पितम् ।
न ते तत्रोचितो वासस्त्यजास्मद्वसुधां जवात् ।।
इत्यूचुस्तं निशम्यासौ रामो विस्मयमागतः ।
समुद्रं प्राप्य वसुधां वस्तुं याचितवानभूत् ।।
सोऽपि दूरतरं गत्वा ददौ रामाय भूतलम् ।
रामस्तत्र वसन् क्रोधं ज्ञात्वा स्वानर्थदायकम् ।।
अशपद्राक्षसो भूया इति स्वं क्रोधमूर्जितम् ।
विप्राणामाधिपत्ये तु प्रजानर्थः प्रजायते ।।
इत्याधिपत्यराहित्यं द्विजानामतनोद्भुवः ।
लोभावेशवशाज्जामदग्न्यमुच्चाटिता द्विजाः ।।
जामदग्न्यस्य शापेन प्रभुत्वं नागमद्भुवः ।
अतः पराश्रयेणैव द्विजानां जीवनं भुवि ।। इति ।। १५ ।। मूलम् -

**रामेण शप्तः कलिराजमन्त्री क्रोधः स भूत्वा दनुजो दुरात्मा ।**
**मूकाभिधानं परिधृत्य घोरश्चचार बाधां विदधत्प्रजानाम् ।। १६ ।।**

(६७) व्याख्या - सम्प्रति शप्तो रामेण च क्रोधो मूको नामासुरोऽभवदिति



Scanned with CamScanner

Scanned with CamScanner

प्रामाणिकोक्तिमनुसृत्य क्रोधस्य मूकासुरात्मनाविर्भावमाचक्षाणस्तदीयदौरात्म्यमाह - रामेणेति। कलिराजमन्त्री स क्रोधः रामेण शप्तो राक्षसो भवेति शप्तः सन् दुरात्मा - दुष्टबुद्धिः, दनुजो - राक्षसः, भूत्वा मूकाभिधानं परिधृत्य- धृत्वा, प्रजानां बाधां विदधत् - कुर्वन्, सन् चचार। इत आरभ्य श्लोकदशके अपेक्षणीयप्रमाणम् इतो दशमस्य, जघान बाणैः इति पद्यस्य, व्याख्यायाम् उदाहरिष्यामः ।। १६ ।। मूलम् -

**स कामरूपो दनुजो वनान्ते वराहरूपं समुपेत्य घोरम् ।**
**छिन्दन् द्रुमान् भूमिधरान् विभिन्दन्वित्रासयन् पक्षिमृगान् व्यहार्षीत् ।। १७ ।।**

व्याख्या - स इति । कामरूपः स दनुजो मूकः घोरं वराहरूपं समुपेत्य वनान्ते द्रुमान् छिन्दन् - भञ्जयन्, भूमिधरान् - पर्वतान्, विभिन्दन् - भेदयन्, पक्षिणो मृगांश्च वित्रासयन् - उद्वेजयंश्च सन्, व्यहार्षीत् - विहृतवान् ।। १७ ।। मूलम् -

**अथैकदा तं दनुजं पुरारिर्वराहरूपेण वने चरन्तम् ।**
**मुनीन् समस्तानपि बाधमानं मूकाभिधं शासितुमैच्छदीशः ।। १८ ।।**

व्याख्या - अथानन्तरम्, एकदा - एकस्मिन् काले, ईशो जगन्नियन्ता, पुरारिस्त्रिपुरान्तकः, वराहरूपेण वने चरन्तम् समस्तान् मुनीन् बाधमानं मूकाभिधं दनुजं शासितुं - निग्रहीतुम्, ऐच्छत् - इच्छति स्म।। १८ ।। मूलम् -

**लतासमुन्नद्धशिरोजराजन्मयूखबर्हो धृतचापबाणः ।**
**भूत्वा महेशो भगवान्किरातो द्वीपिद्विपाक्रान्तवने चचार।। १९ ।।**

व्याख्या - लतेति । भगवान् महेशः - शम्भुः, लताभिः समुन्नद्धेषूद्ग्रथितेषु, शिरोजेषु - केशेषु, राजद्भासमानं, मयूरबर्हं (६८) यस्य तथोक्तः धृतचापबाणः किरातो - व्याधः, भूत्वा द्वीपिभिर्व्याघ्रैः द्विपैर्गजैश्च आक्रान्ते वने चचार ।। १९ ।। मूलम् -

**घोरः कदाचिद्दनुजाधमोऽयं वराहरूपः किल मूकनामा ।**
**वनेचरस्यास्य किरामूर्तेर्जगाम नेत्रातिथितां दुरात्मा ।। २० ।।**

व्याख्या - घोर इति । वराहरूपः घोरः अयम् मूकनामा दनुजाधमः कदाचित् वनेचरस्य - किरातस्य मूर्तिरिव मूर्तिर्यस्य स तथोक्तस्य अस्य शिवस्य नेत्रयोरतिथितां - गोचरत्वं जगाम - प्राप ।। २० ।। मूलम् -

**बाणान् विमुञ्चत्यथ तत्किराते पलायमानो विपिने वराहः ।**



Scanned with CamScanner

Scanned with CamScanner

**पृथातनूजाश्रमभूमिभागमुपेयिवान् घुर्घुरनादघोरः ।। २१ ।।**

व्याख्या - बाणानिति । स चासौ किरातश्च तत्किरातः तस्मिन् बाणान् विमुञ्चति सति विपिने पलायमानः वराहः घुर्घुर इति यो नादस्तेन घोरः सन् पृथातनूजस्यार्जुनस्य आश्रमभूमेर्भागम् उपेयिवान् - प्राप्तवान् । उपेयिवाननाश्वाननूचानश्च इति निपातनादुपपूर्वादिणो भूतमात्रे लिड्वा तस्य नित्यं क्वसुरिडागमश्च ।। २१ ।। मूलम् -

**पलायमानं दनुजं तदानीमीशः किरातोऽप्यनुधावमानः ।**

**पृथातनूजेन तपस्विनायमेवं बभाषे वचनं महार्थम् ।। २२ ।।**

व्याख्या - पलायमानमिति । तदानीमाश्रमप्राप्तिकाले, पलायमानम् - धावन्तम्, दनुजम् - वराहरूपिणं मूकासुरम्, अनुसृत्य ईशो हरांशः अयं किरातोऽपि धावमानः सन् तपस्विना पृथातनूजेनार्जुनेन एवं वक्ष्यमाणं वचनं बभाषे उक्तः । भाषतेः कर्मणि लिट्लकारेण गुणकर्मण इदमर्थस्याभिधानात् न द्वितीया, गौणे कर्मणि दुह्यदेरित्यनुशासनात् ।। २२ ।।

मूलम् -

**मदन्तिकं प्राप्तममुं वराहं भवान्न हन्तुं यततां किरात ।**

**क्षात्रो हि धर्मो भुवि विश्रुतोऽयं यल्लक्ष्यसन्ताडनतत्परत्वम्।।२३।।**

(६९)व्याख्या - मदिति । हे किरात ममान्तिकं - मत्समीपं प्राप्तम्, अमुं वराहं हन्तुं - संहर्तुं, भवान् न यतताम् - मा यतताम् । हि यस्मात् कारणात् लक्ष्यस्य शरव्यस्य, सन्ताडने प्रहरणे, तत्परत्वम् आसक्तत्वमिति यावत् । अयमिति विधेयप्राधान्यात् पुल्लिङ्गनिर्देशः। क्षात्रः क्षत्रसम्बन्धी धर्मः सन् भुवि विश्रुतः प्रसिद्धः । तथोक्तम् -

मृगयापि महाटव्यां क्षत्राणां धर्म उच्यते

इति ।। २३ ।। मूलम् -

**पलायितोऽयं विपिने वराहो न मुच्यते पार्थ मया कदापि ।**

**धर्मं विजानीहि ममापि सम्यक् प्राप्तापरित्यागमिति न्यगादीत् ।। २४ ।।**

व्याख्या - पलायित इति हि पार्थ विपिने मया पलायितो वराहः कदापि न मुच्यते। प्राप्तस्यापरित्यागं ममापि धर्मं सन्तं सम्यक् जानीहि बुध्यस्व । इति न्यगादीत् उवाच । किरात इति शेषः ।। २४ ।। मूलम् -

**जघान बाणैर्निशितैर्वराहं वचांस्यनादृत्य पृथात्मजस्य ।**



Scanned with CamScanner

Scanned with CamScanner

**ततः किरातार्जुनयोर्वनेऽस्मिन्नभूतपूर्वं समभूत्समीकम् ।। २५ ।।**

व्याख्या - जघानेति । किरातः पृथात्मजस्य वचांसि अनादृत्य निशितैस्तीक्ष्णैर्बाणैर्वराहं जघान हतवान् । ततो हननानन्तरम् अस्मिन् वने किरातार्जुनयोः पूर्वं भूतं भूतपूर्वम् भूतपूर्वे चरडिति निर्देशाद् भूतशब्दस्य पूर्वनिपातः । न भूतपूर्वमभूतपूर्वम् । समीकं युद्धम् समभूत् बभूव।

महाभारतेऽरण्यपर्वान्तर्गतकिरातपर्वणि वैशम्पायनेन -

गतेषु तेषु सर्वेषु तपस्विषु महात्मसु ।
पिनाकपाणिर्भगवान् सर्वपापहरो हरः ।।
कैरातं वेषमास्थाय काञ्चनद्रुमसन्निभम् ।
विभ्राजमानो विपुलो गिरिर्मेरुरिवापरः ।।
श्रीमद्धनुरुपादाय शरानाशीविषोपमान् ।
निष्पपात महादेवो दहनो देववानिव ।।
देव्या सहोमया श्रीमान् समानव्रतवेषया ।
नानावेषधरैर्हृष्टैर्भूतैरनुगतस्तदा ।।
किरातवेषसञ्छन्नस्त्रीभिश्चापि सहस्रशः ।
अशोभत तदा राजन् स देशोऽतीव भारत ।।
क्षणेन तद्वनं सर्वं निःशब्दमभवत्तदा ।(७०)
नादः प्रस्रवणानां च पक्षिणां चाप्युपारमत् ।।
स सन्निकर्षमागम्य पार्थस्याक्लिष्टकर्मणः ।
मूकं नाम दनोः पुत्रं ददर्शाद्भुतदर्शनम् ।।
वाराहं रूपमास्थाय चरन्तं विजयान्तिके ।
हन्तुं जजल्प दुष्टात्मा तमुवाचाथ फाल्गुनः ।।
गाण्डीवं धनुरादाय शरानाशीविषोपमान् ।
सज्यं धनुर्वरं कृत्वा ज्याघोषेण निनादयन् ।।
यन्मां प्रार्थयसे हन्तुमनागसमिहागतम् ।
तस्मात्त्वां पूर्वमेवाहं नेतास्मि यमसादनम् ।।



Scanned with CamScanner

Scanned with CamScanner

तं दृष्ट्वा प्रहरिष्यन्तं फाल्गुनं दृढधन्विनम् ।
किरातरूपी सहसा वारयामास शङ्करः ।।
मयैष प्रार्थितः पूर्वम् इन्द्रकीलसमप्रभः ।
अनादृत्य च तद्वाक्यं प्रजहाराथ फाल्गुनः ।।
किरातश्च समं तस्मिन्नेकलक्ष्ये महाद्युतिः ।
प्रमुमोचाशनिप्रख्यं शरमग्निशिखोपमम् ।।
तौ मुक्तौ सायकौ ताभ्यां समं तत्र निपेततुः ।
मूकस्य गात्रे विस्तीर्णे शैलसंहनने तदा ।।
तथाशनेर्विनिर्घोषो वज्रस्येव च पर्वते ।
तथा तयोः सन्निपातः शरयोरभवत्तदा ।।
संविद्धो बहुभिर्बाणैर्दीप्तास्यैः पन्नगैरिव ।
ममार राक्षसं रूपं भूयः कृत्वातिदारुणम् ।।
स ददर्श ततो जिष्णुः पुरुषं काञ्चनप्रभम् । इत्युपक्रम्य
अर्जुनो योद्धुमारेभे किरातेन ततो रुषा ।।

इत्युक्तम् ।। २५ ।। मूलम् -

**शिवेन कैरातवपुष्मतायं हतः स मूकः किटिरूपधारी ।**
**साक्षादनीशो ह्यपकर्तुमीशे भूत्वा मधुर्मन्मथमित्रमासीत् ।। २६ ।।**

व्याख्या - शिवेनेति । किरातस्येदं कैरातं वपुर्यस्यास्तीति कैरातवपुष्मांस्तेन शिवेन हतः संहतः किटिरूपधारी सः अयं मूकः, ईशे इति विषयसप्तमी, ईश्वरविषये इत्यर्थः। साक्षादपकर्तुम् अनीशः असमर्थः सन् मधुर्वसन्तः भूत्वा मन्मथस्य मित्रं सुहृदासीत् ।। २६ ।। मूलम् -

**स चैकदा मन्मथमेवमूचे वराहरूपेण वने चरन्तम् ।**
**मामीश्वरोऽयं व्यथयाम्बभूव तं कामरूपं निशितैः शरौघैः ।। २७।।**

व्याख्या - स मधुः एकदा मन्मथम् एवम् वक्ष्यमाणप्रकारेण ऊचे । पादोनश्लोकद्वयेन तद्वचनमाह - वराहेति । शिवा(७१)पकारेति । कामेनेच्छया रूपाणि यस्य तम् । इच्छामात्रपरिकल्पितनानारूपशालिनम्, अत एव वराहरूपेण वने चरन्तं तं माम्, अयमीश्वरः



Scanned with CamScanner

निशितैस्तीक्ष्णैः शराणामोघैः समूहैः व्यथयाम्बभूव ताडयामास । व्यथ ताडने । कर्तरि णिजन्ताल्लिट् ।। २७ ।। मूलम् -

**शिवापकारे महती मनीषा सञ्जायतेऽथापि न मेऽस्ति शक्तिः ।**
**साक्षात्प्रतीकारविधावतस्त्वं जित्वेशमानन्दय मां नितान्तम्।। २८ ।।**

व्याख्या - शिवेति । शिवस्यापकारे शिवोद्देश्यकापकारविषये महती मनीषा बुद्धिः सञ्जायते। तथा सति क्रियतामपकार इति चेत्तत्राह - अथापीति। तथापि मनीषासत्त्वेऽपीत्यर्थः। साक्षात्प्रतीकारविधौ प्रतिक्रियायां मे मम शक्ति र्नास्ति। कर्तव्यमुपसंहरति - अत इति। अतो यतो मे शक्त्यभावस्तस्मात्त्वम् ईशं जित्वा माम् नितान्तमतिशयेन आनन्दय । एवमूचे ।।२८।। मूलम् -

**समन्मथोऽयं मधुबोधितः सन् शिवं विजेतुं कथमप्यकल्पः।**
**कलिं त्वमेह्येष तवेष्टसिद्धिं विधास्यतीत्यादरतो जगाद।। २९ ।।**

व्याख्या - स इति । मधुना बोधितः सः अयं मन्मथः कथमप्यतिप्रयासेनापि शिवं विजेतुम् अकल्पः असमर्थः सन् । निघण्टुः - कल्पो नीरोगदक्षयोः इति नानार्थरत्नमाला । कलिं त्वम् एहि प्राप्नुहि । एष कलिः तव इष्ट सिद्धिं विधास्यति करिष्यति । इति एवम् आदरतो विश्वासेन जगाद उवाच ।। २९ ।। मूलम् -

**ततः कलिं प्राप्य मधुर्दुरात्मा शिवापकारं प्रति चिन्तति स्म ।**
**संमोदयंस्त्वं मधुमेवमेष शिवप्रतीकारवचांस्यवादीत् ।। ३० ।।**

व्याख्या - तत इति । ततो मन्मथोक्त्यनन्तरम्, दुरात्मा मधुः कलिं प्राप्य शिवापकारं प्रति चिन्तति स्म मन्त्रयामास । चिति स्मृत्याम् । इदित्वाण्णिज्विकल्पः । लट् स्मे इति भूते लट् । एष कलिः तं मधुं संमोदयन् हर्षयन् सन् एवं वक्ष्यमाणप्रकारेण शिवप्रतीकारवचांसि शिवविषयकप्रतिक्रियावचनानि अवादीत् जगाद । वचनानीति बहुवचनं तु वक्ष्यमाणविषयभेदाभिप्रायकम् ।। ३० ।। (७२) मूलम् -

**अत्रान्तरे भूमितलेऽवतीर्णः श्रीशङ्कराख्यामधिगत्य शम्भुः ।**
**समुद्धरिष्यत्यखिला विलीनाः श्रुतीरितस्तत्र न नोऽवकाशः ।। ३१ ।।**

व्याख्या - पञ्चभिः कलिवचनान्याह - अत्रेति । अत्रान्तरेऽस्मिन्नवसरे शम्भुर्भूमितलेऽवतीर्णः आविर्भूतः सन् शङ्कराख्यां अधिगत्य प्राप्य विलीनाः नास्तिकादिभिः



Scanned with CamScanner

अप्रकाशतां नीताः श्रुतीः उपनिषद इत्यर्थः । समुद्धरिष्यति उज्जीवयिष्यति । अतः कारणात् तत्र तत्समये नः अस्माकं अवकाशः अवसरः न भविष्यति ।। ३१ ।। मूलम् -

**स केषुचिच्छङ्करयोगिवर्यो यातेषु वर्षेषु महानुभावः ।**
**कैलासमेष्यत्यमरार्थितोऽयं लप्स्यामहे हृद्यमथावकाशम् ।। ३२ ।।**

व्याख्या - स इति । महानुभावः शङ्करयोगिवर्यः केषुचित् कतिपयेषु वर्षेषु यातेषु गच्छत्सु सत्सु अमरैरर्थितः प्रार्थितः सन्कैलासम् एष्यति प्राप्स्यति। अथ तदीयकैलासगमनानन्तरं हृद्यं हृदयप्रियम् अवकाशं समयं लप्स्यामहे प्राप्स्यामः । तावत्पर्यन्तं नास्माकमवकाश इति भावः । अत्रान्तरे स केषुचित् इति पद्यद्वयोक्तकथा तु एतत्सर्गीयतृतीयश्लोकव्याख्योदाहृत स्कान्दीयशिवरहस्यगतश्रीशङ्करभगवत्पादकथाप्रतिपादकषोडशाध्यायेन विस्तरतोऽवगन्तव्या। मूलकारोऽपि तामेवकथां द्वितीयसर्गे निरूपयिष्यति च ।। ३२ ।। मूलम् -

**तदावतीर्यावनिमण्डलेऽस्मिन् संसाध्य जीवात्मभिदादिकानि ।**
**अद्वैतसिद्धान्तममुष्य भिक्षोर्निराकुरु त्वं निगमान्विभिन्दन् ।। ३३ ।।**

व्याख्या - तदेति । तदा तत्समये । अस्मदनुकूलसमये इत्यर्थः । अवनिमण्डले अवतीर्य आविर्भूय जीवात्मनोर्जीवब्रह्मणोर्भिदा भेद आदिर्येषां तानि । आदिपदेन जीवाणुत्व-दासत्व-जगत्सत्यत्व-मुक्तितारतम्यादीनां संग्रहः । संसाध्य साधयित्वा, निगमान् उपनिषदः, विभिन्दन् अद्वैतप्रतिपादकादिवचननिरसनेन विशकलितान् कुर्वन्नित्यर्थः । अमुष्य भिक्षोः शङ्करयतेः, अद्वैतसिद्धान्तं निराकुरु त्वमिति शेषः ।। ३३ ।। (७३)मूलम् -

**पुराणवाचां शिववर्णिकानां प्रकल्पय त्वं किल तामसत्वम् ।**
**तप्तारिमुद्राविधृतेरतीव प्राशस्त्यमुत्ख्यापय भूतलेऽस्मिन् ।। ३४ ।।**

व्याख्या - पुराणेति । शिवस्य वर्णिकानां स्ताविकानां पुराणवाचा शैव-भविष्यन्मार्कण्डेय-कौर्म-वामन-लैङ्ग-वाराह-स्कन्द-मात्स्य-ब्रह्माण्डपुराणानामित्यर्थः । तामसत्वं प्रकल्पय समर्थय। अस्मिन् भूतले तप्तारिमुद्राविधृतेः तप्तचक्रमुद्राधारणस्य अतीवातिशयेन प्राशस्त्यं उत्ख्यापय उत्कृष्टतया कथय । पुराणादिषु शैवानां सात्त्विकत्वाभिधानस्य तप्तमुद्राधारणनिषेधस्य च दर्शनात् तद्विरुद्धमर्थं समर्थयेति भावः । तप्तमुद्रानिषेधपराणि वचनानि स्मार्तोऽपि इति तृतीयश्लोकव्याख्यायामुदाहृतानि द्रष्टव्यानि । सम्प्रति शिवपुराणसात्त्विकत्वाभिधायीनि पुराणान्यत्रोदाहरामः । तथाहि - स्कान्दे शङ्करसंहितायां शिवरहस्यखण्डे उद्भवकाण्डे द्वितीयाध्याये



Scanned with CamScanner

पुराणपरिगणनावसरे प्रतिपादितम् ।

ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ।
भविष्यं नारदीयं च मार्कण्डेयमतः परम् ।।
आग्नेयं ब्रह्मवैवर्तं लैङ्गं वाराहमेव च ।
स्कान्दं च वामनं चैव मात्स्यं कौर्मं च गारुडम् ।।
ब्रह्माण्डं चेति पुण्योऽयं पुराणानामुपक्रमः ।
तत्र शैवानि शैवं च भविष्यं च द्विजोत्तमाः ।।
मार्कण्डेयं तथा लैङ्गं वाराहं स्कान्दमेव च ।
मात्स्यमन्यत्तथा कौर्मं वामनं च मुनीश्वराः ।।
ब्रह्माण्डं च दशैतानि त्रीणिलक्षाणि संख्यया ।
ग्रन्थानां महिमा सर्वैः शिवस्यैव प्रकाश्यते ।।
विष्णोर्हि वैष्णवं तद्वत्तथा भागवतं द्विजाः ।
नारदीयपुराणं च गारुडं वैष्णवं विदुः ।।
ब्राह्मपाद्मे ब्रह्मणो द्वे अग्नेराग्नेयमेककम् ।
सावित्रं ब्रह्मवैवर्तमेवमष्टादश स्मृताः ।।
दश शैवपुराणानि सात्विकानि विदुर्बुधाः ।
श्रद्धेयानि द्विजवरैस्तेषां धर्मास्तु तत्र यत् ।।
विद्योपदेष्टा योगिभ्यः शुद्धस्फटिकसन्निभः ।
न निद्राति शिवः क्वापि ब्राह्मणाधिपतिः शिवः ।।
ब्रुवन्त्येव पुराणानि ब्राह्मणानां कथाः शुभाः ।
दश शैवपुराणानि हिंसादोषपराङ्मुखाः ।।
वैष्णवानि च चत्वारि तामसानि मुनीश्वराः ।
क्षत्रियाणां श्रुता धर्मास्तेषु तद्देवता हरिः ।।
तमः कृष्णमुदासीनं कूटकृत्यविशारदम् ।(७४)
निद्रालस्यप्रमादादिवञ्चनाद्यास्तु तामसाः ।।
निद्रालस्यप्रमादाद्यास्तद्गुणाः परिकीर्तिताः ।



Scanned with CamScanner

कृष्णो विष्णुः स्मृतः शेषशायी भक्तविमोहकः ।।
तेषु च क्षत्रियाणां च धर्मा विप्रैरुदाहृताः ।
ब्राह्मे तु राजसे वैश्यसेव्ये सर्वत्र सम्मते ।।
दुःखास्पदं रक्तवर्णं चञ्चलं च रजो मतम् ।
गुणत्रयसमायुक्तमाग्नेयं सौरमेव च ।।
तस्माच्छैवानि विप्राणां पुराणानि हितानि हि ।।

इति । यत्तु मध्वः -

वैष्णवं नारदीयं च तथा भागवतं शुभम् ।
गारुडं च तथा पाद्मं वाराहं शुभदर्शने ।।
षडेतानि पुराणानि सात्विकानि निबोध मे ।
ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च ।।
भविष्यं वामनं ब्राह्मं राजसनि निबोध मे ।
मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कान्दं तथैव च ।।
आग्नेयं च षडेतानि तामसानि निबोध मे ।

इत्यादिवचनानि परिकल्प्य तामसा नरकाय वै इत्यादि पठित्वा स्कान्दादेरप्रामाण्यं जल्पति, तत्तुच्छम् - पूज्यतमपुराणनामप्रामाण्यकल्पनापेक्षया तदुदाहृतकल्पिततामसवाक्यस्यैव लाघवादप्रामाण्यकथनौचित्यात् । न चास्य बाधकाभावादप्रामाण्यं नेति वाच्यम् । इदं पुराणं मुक्त्वैकं नास्त्यन्यत्साधनं परमित्यादिकौर्मस्कान्दादिपठिततत्तत्पुराणोत्कर्षप्रतिपादकानेक वाक्यानामेव बाधकत्वात् । न च विमतोदाहृतवचनमकल्पितमिति भ्रमितव्यम्। नानादेशेभ्यः समानीतपुस्तकेषु तद्वचनस्यादर्शनात् । पुराणेषु तद्विरुद्धपरिगणनायास्तत्प्रतिकूल गुणशालित्वनिरूपणस्य चोपलम्भाच्च। तथा हि प्रभासखण्डे -

चतुर्भिर्भगवान् विष्णुर्द्वाभ्यां ब्रह्मा तथा रविः ।
अष्टादशपुराणेषु शेषेषु भवान् शिवः ।।

इति । शिवरहस्ये -

दश शैवपुराणानि सात्विकानि विदुर्बुधाः ।
वैष्णवानि च चत्वारि तामसानि विदुर्बुधाः ।।



Scanned with CamScanner

Scanned with CamScanner

ब्राह्मे द्वे राजसे वैश्यसेव्ये सर्वत्रसम्मते ।
गुणत्रयसमायुक्तमाग्नेयं सौरमेव च ।। इति ।

न च पुराणसामान्यस्य पूज्यतमत्वं प्रजल्पता भवता वैष्णवानां तामसत्वं कथमङ्गीकृतमिति वाच्यम् । वक्षमाणरीत्या तामसत्वादेः कल्पपरत्वनिरूपणेन कस्यापि पुराणस्य तामसत्वानभ्युपगमात्। तथाहि । कैश्चिच्छैवानां पुराणानां तामसत्वमभिधीयते । कैश्चित् वैष्णवानां पुराणानाम् । (७५)पुराणेषूभयथोपलम्भात्संशयः । किं शैवान्युपादेयानि किं वैष्णवानीति? किमत्र न्याय्यम्? नोभयमपीति प्रतीमः। पूज्यतमपुराणानां हेयत्वोक्तेरयुक्तत्वात्। अत्रेदं विचार्यते- किमत्र तामसत्वं प्रणेतृदोषेण? उत प्रमेयदोषेण ? आहोस्वित् कल्पदोषेणेति? नाद्यः । तमःप्रधानप्रणेतृप्रणीतप्रबन्धानामुन्मत्तप्रलपनतुल्यत्वेन तत्र प्रेक्षावतां प्रवृत्त्यसम्भवापत्तेः। दृश्यते च सकलपुराणेष्ववैषम्येण महाजनप्रवृत्तिः । न च यस्य यस्मिन् प्रत्ययः स तस्मिन् प्रवर्तताम्, नान्यस्तत्र प्रवर्तत इति वाच्यम् । वैष्णवैः स्वीयप्रबन्धेषूपष्टम्भकत्वेन स्कान्दादिशैवपुराणानां शैवैश्च वैष्णवपुराणानामुदाहृतत्वेन तत्र व्यवस्थानुपलम्भात् । ननु योंऽशोऽविरुद्धः स ग्राह्यते इति चेद्भ्रान्तोऽसि । तत्त्वनिरूपकपुराणेषु विरुद्धाविरुद्धभागकल्पनस्यान्याय्यत्वात् । न च तामसादिवस्तुवर्णनसमये प्रणेता तामसादिरूप इति तत्तद्भागस्य तामसादित्वमिति वाच्यम् । उन्मत्तादिवर्णनसमये प्रणेतुरुन्मत्तत्वाद्यापत्तिः । न हि तथा लोकेऽनुभवो दृश्यते महाकविषु । येन विषयवैचित्र्यात्प्रणेतुस्तत्तदात्मकत्वं भवदभिहितं युज्येत । किञ्च, अप्रामाण्यग्रहग्रस्तस्य सर्वथाप्यप्रामाणिक त्वेन तदुक्तिषु हेयोपादेयविभागस्य कर्तुमशक्यत्वेन अविरुद्धांशो ग्राह्यः इत्युक्तिः कथं सङ्गच्छेत ? अपि च प्रमाणतया भवदभिमतमहाभारतशान्तिपर्वान्तर्गत राजधर्मप्रकरणस्थितवचनजातेन सर्वज्ञमहेश्वरप्रणीत शतकोटिप्रविस्तराविदितस्कान्दपद्मादिभेदपुराण राशिश्रवणसन्तुष्टान्तरङ्गब्रह्मणः सकाशाच्छ्रुतवतः पुरुषायुषह्रासादिपर्यालोचनया चतुर्लक्ष्या संक्षिप्याष्टादशधा विभागकरणमात्रेण प्रणेतृपदवीमधिरूढतया ज्ञातस्य व्यासमहर्षेरपूर्वतया रचनाकर्तृत्वाभावेन विषयवैचित्र्येण वा तामसत्वकथनं (७६) कथं सङ्घटतामित्यायुष्मता भवतैवानुसन्धेयम् । भारतवचनानि त्वेतद्ग्रन्थीयचतुर्थसर्गगतैकादशश्लोकव्याख्यायामुदाहरिष्यामः। तस्मान्न प्रणेतृदोषेण पुराणानां तामसत्वमिति सिद्धम् । नापि द्वितीयः । प्रमेयभूतवस्तुगततामसत्वेन पुराणानां तामसत्वाभ्युप गमे तेषामामूलचूडं तामसत्वेन तद्गतवचनानामनुपष्टम्भकतया प्रमाणत्वेनोदा हरणस्यासाङ्गत्यापत्तेः । न च सात्त्विकवस्तुवर्णनमपि पुराणेषु दृश्यत इति तद्भागस्य सात्त्विकत्वेन



Scanned with CamScanner

तद्गतवचनस्योदाहरणीयत्वं युज्यत इति वाच्यम् । तथा सति प्रथमकोटिप्रवेशापत्त्या तस्य पूर्वमेव तत्त्वनिरूपकपुराणेषु इत्यादिग्रन्थेन दत्तोत्तरत्वात् । यश्च कल्पदोषेण इति तृतीयपक्षोऽवशिष्यते। तमेव युक्ततममुत्पश्यामः । तथा हि । मात्स्ये -

संकीर्णाः सात्विकाश्चैव राजसाश्चैव तामसाः ।

इत्यादिना कल्पानधिकृत्य

यस्मिन् कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा ।
तस्य तस्य तु माहात्म्यं तत्त्वरूपेण कीर्त्यते ।।

इत्युक्तम् । तत्र तस्य तस्येत्यस्य तत्तत्कल्पस्येत्यर्थः । तत्स्वरूपेणेत्यस्य पुराणरूपेणेत्यर्थः । ततश्च सङ्कीर्णकल्पादिमाहात्म्यं पुराणैर्निरूप्यत इति स्वारसिकार्थं पर्यालोचनया पुराणेषु तामसत्वाभावः फलितः। शैवानि तामसानि वैष्णवानि तामसानीत्युक्तिस्तु तामसकल्पसम्बन्धित्वेन प्रवृत्तेति ज्ञेयम् । शैवपुराणेषु वैष्णवपुराणतामसत्वस्य विष्णुपुराणेषु शिवपुराणतामसत्वस्य च प्रतिपादनं कल्पभेदेनेत्यवगन्तव्यम् । यत्तु तत्स्वरूपेणेति मात्स्यवचनस्य तामसादिरूपेण ब्रह्मणा इत्यर्थनिरूपणं तत् व्युत्पत्तिशून्यजनसम्प्रदायपदवीम् अधिरोहति । यच्छब्दद्वयप्रतिपादित कल्पपुराणप्रतिनिर्देशात्मकतच्छब्दद्वयेन तयोरेव परामर्शस्य न्याय्यतया ब्रह्मपर्यन्तानुधावन स्यायुक्तत्वात् । यदि च तद्रूपेणेत्यस्य तत्तदात्मकब्रह्मरूपेणेत्यस्मिन्नर्थे आग्रहः, तर्हि सङ्कीर्णकल्पानु गुण्येन सङ्कीर्णतामधिगतेन ब्रह्मणा प्रणीतपुराणानां सङ्कीर्णत्वादन्तरेण सङ्कीर्णपुराणानि सात्विकराजसतामसत्वरूप(७७)त्रितयपरिगणनमसङ्गतं स्यात्। इत्थं च न कान्यपि पुराणानि तामसानीति सिद्धम्।। ३४ ।। मूलम् -

**इत्थं व्यधास्यो यदि सादरस्त्वं तदाऽभविष्यद्भवदिष्टसिद्धिः ।**
**विना मदुक्तां सरणिं न चान्या महेश्वरस्यापकृतावुपायः।। ३५।।**

व्याख्या - इत्थमिति। हे मधो, त्वं सादरः सन् इत्थम् एवं प्रकारेण यदि व्यधास्यः कुर्याश्चेत्, तदा भवतः इष्टस्येष्टार्थस्य सिद्धिः निष्पत्तिः अभविष्यत् । लिङ्निमित्ते लृङ् क्रियातिपत्तौ इति हेतुहेतुमद्भावे भविष्यति भवतेर्लुङ्प्रत्ययः । मदुक्तां मत्प्रतिपादितां सरणिं रीतिं विना विहाय, महेश्वरस्य अपकृतौ अपकारविषये अन्यो भिन्नः उपायः नास्ति । एवमेष शिवप्रतीकारवचांस्यवादीदिति पूर्वेण सम्बन्धः । अत्र कलिवाक्येऽपेक्षितप्रमाणानि तृतीय श्लोकव्याख्योदाहृतसौरपुराणादवगन्तव्यानि ।। ३५ ।। मूलम् -



Scanned with CamScanner

**इत्येवमुक्तः कलिना वसन्तो नितान्तमन्तः कलयन् प्रमोदम् ।**
**निरीक्षमाणः कलिनोपदिष्टमनेहसं क्वापि चिरं विलिल्ये।। ३६ ।।**

इति श्रीमद्रघुनाथसूरिकृतमाणिक्यमञ्जर्यां क्रोधांशमूकांशकिटित्वमूलमधुं प्रति कल्युपदेशो नाम प्रथमः सर्गः ।। १ ।।

व्याख्या - इतीति । इति शिवापकारप्रकरणविषये । इति हेतुप्रकरणप्रकारादिसमाप्तिषु इत्यमरः । कलिना एवं पूर्वोक्तप्रकारेण उक्तः वसन्तो मधुः अन्तरन्तरङ्गे नितान्तम् अधिकं प्रमोदं कलयन् गच्छन् सन् कलिना उपदिष्टं निर्दिष्टम् अनेहसं कालम् । कालो दिष्टोऽप्यनेहापि इत्यमरः । निरीक्षमाणः सन् सनातनाद्वैतधर्मप्रतिष्ठापकशङ्करभगवत्पादकैलासगमन कालनिरीक्षणबद्धान्तरङ्गः सन् इत्यर्थः । चिरं बहुकालं क्वापि प्रदेशविशेषे विलिल्ये लीनः ।। ३६ ।।

इति श्रीमद्रघुनाथसूरिकृतमाणिक्यमञ्जरीव्याख्यायां
भावदीपिकाख्यायां क्रोधांशमूकांशकिटित्वमूलमधुं प्रति
कल्युपदेशो नाम
प्रथमः सर्गः ।। (७८)





Scanned with CamScanner



# अथ द्वितीयः सर्गः

मूलम्

**भूयस्यनेहस्यथ सम्प्रयाते व्याप्तावनिर्नास्तिकमण्डलेन ।**

**अद्वैतवादः खसुमायते स्म वेदाः समस्ता नितरां विलीनाः ।। १ ।।**

व्याख्या - सम्प्रति द्वितीयसर्गे शङ्करभगवत्पादकथां विवक्षुस्तदुत्पत्ति कारणनास्तिकादिव्यापनेन सञ्जातानर्थमाह - भूयसीति । अथ कल्युपदेशतो मधुनिर्गमनानन्तरं भूयसि बहुतिथे, अनेहसि काले, सम्प्रयाते गते सति, अवनिः भूमिः, नास्ति परलोकमेषान्ते नास्तिकाः, तेषां मण्डलेन व्याप्ता पूर्णा, अभूत् । तेन सञ्जातानर्थमाह - अद्वैतेति । समस्ताः वेदाः नितराम् अतिशयेन, विलीना लुप्ता इत्यर्थः, अभूवन् । अद्वैतवादः वेदान्तप्रतिपादितजीवब्रह्मैक्यनिरूपणं खसुमायते स्म आकाशकुसुमवदाचचार लुप्तोऽभूदित्यर्थः। प्रथमसर्गे अस्मिन् प्रतिश्लोकं यानि वचनान्युदाहर्तव्यानि, तानि प्रथमसर्गगततृतीयश्लोकव्याख्योदा हृतशङ्करभगवत्पादमाहात्म्यनिरूपकस्कान्दादिषु द्रष्टव्यानि ।। १ ।। मूलम् -

**वेदाध्वविध्वंसकनास्तिकीयधरातलव्यापिनमिन्द्रमुख्याः ।**

**निशम्य देवर्षिमुखादुपेत्य शम्भुं शरण्यं जनिमार्थयन्त ।। २ ।।**

व्याख्या - ततः किं वृत्तं तत्राह - वेदेति। मुखमिव प्रधानत्वात् मुख्यः। इन्द्रो मुख्यो येषां ते इन्द्रमुख्याः इन्द्रादयो देवाः । देवर्षेः नारदस्य मुखात् वचनादित्यर्थः । वेदाध्वनो वेदमार्गस्य विध्वंसकानां नाशकानां नास्तिकानां सम्बन्धि नास्तिकीयम्, धरातले भूप्रदेशे व्यापिनं व्याप्तिं निशम्य आकर्ण्य, शरणे रक्षणे साधुं शरण्यम् शम्भुम् शङ्करमुपेत्य प्राप्य जनिं शिवकर्तृकधरा तलोत्पत्तिं आर्थयन्त प्रार्थयामासुः । अर्थ उपयाच्ञायाम् । भूते कर्तरि लङ् ।। २ ।। मूलम् -

**ततो महात्मा भगवान् महेशो ज्ञात्वा भुवं नास्तिकलोकपूर्णाम् ।**

**उद्धर्तुकामो निगमान्तवाक्यान्यद्वैतसाराण्यवनिं समैच्छत् ।। ३ ।।**

व्याख्या - तत इति । ततो देवताप्रार्थनानन्तरम्, भगवान् षड्गुणैश्वर्यसम्पन्नः अत एव महात्मा महानुभावः महेशः शम्भुः भुवं भूमिं नास्तिकलोकैर्नास्तिकजनैः पूर्णां सतीं ज्ञात्वा अद्वैतं



Scanned with CamScanner

Scanned with CamScanner

सारो येषां तानि निगमान्तवाक्यानि तत्त्वमसीति वेदान्तवाक्यानि उद्धर्तुम् अवनिं भूमिं समैच्छत् इच्छति स्म ।। ३ ।।

(७९) मूलम् -

**देशे ततः केरलनाम्नि पूर्णातटस्थकालट्यभिधाग्रहारात् ।**

**अदूरवर्तिन्युदभूद्वृषाद्रौ लिङ्गात्मना बालशशाङ्कमौलिः ।। ४।।**

व्याख्या - देश इति । ततः अनन्तरं, बालः शशाङ्कः चन्द्रः, मौलौ शिरसि, यस्य स तथोक्तः शिवः, केरलनाम्नि केरलनामके देशे, पूर्णायाः पूर्णानामकनद्याः, तटे तिष्ठतीति तटस्थः तस्मात् कालट्यभिधात् कालटी नामकाग्रहारात् अदूरवर्तिनि समीपवर्तिनि वृषाद्रौ वृषपर्वते लिङ्गात्मना स्वयम्भूलिङ्गस्वरूपेण उदभूत् आविर्बभूव ।। ४ ।। मूलम् -

**अध्यावसन् कालटिमार्यवर्यविद्याधिराजस्य सुतो महात्मा ।**

**पुत्रार्थमस्मिन् शिवगुर्वभिख्यस्तपो व्यतानीद्विमलाधिनार्यः ।। ५।।**

व्याख्या - अध्यावसन्निति । कालटिं कालट्यग्रहारे इत्यर्थः । उपान्वध्याङ्वस इति कर्मत्वे द्वितीया। अध्यावसन् वास्तव्यः आर्यवरस्य विद्वच्छ्रेष्ठस्य विद्याधिराजस्य सुतः पुत्रः विमलायास्तन्नाम्न्याः साध्व्याः अधिनाथः पतिः, शिवगुरुरिति अभिख्या नाम यस्य सः महात्मा महानुभावः, पुत्रार्थं सन्तत्यै, अस्मिन् वृषाद्रौ तपः व्रतम्, अतानीत् अकरोत् ।। ५।। मूलम् -

**स्वप्नेऽस्य दत्त्वा वरमिन्दुमौलिस्तद्दारगर्भाम्बुनिधौ विवेश ।**

**पूर्णेऽथ मासे नवमे पुरन्ध्री प्रसूतिचिह्नं विमला प्रपेदे ।। ६ ।।**

व्याख्या - स्वप्न इति । इन्दुमैलिश्चन्द्रशेखरः, स्वप्ने स्वप्नकाले, अस्य शिवगुरोः, सम्बन्धसामान्ये षष्ठी । वरं दत्त्वा त्वदभीष्टः पुत्रो भविष्यति मदनुशासनादित्युक्त्वेत्यर्थः । तस्य शिवगुरोः, दाराणां भार्यायाः, गर्भाम्बुनिधौ गर्भपारावारे, विवेश प्रविशति स्म । अथ गर्भप्रवेशानन्तरम्, नवमे मासे पूर्णे सति क्रमेणेति शेषः। विमलानाम्नी पुरन्ध्री पतिव्रता, प्रसूतिचिह्नं प्रसवलक्षणं प्रपेदे लेभे ।। ६ ।। मूलम् -

**शिवोऽयमेकोननवत्युपेतशताष्टकभ्राट्त्रिसहस्रिकायाम् ।**

**कलेर्गतायां विभवाब्दराधसिते दशम्यामुदभूद्धरिण्याम् ।। ७ ।।**

व्याख्या - शिव इति । कलेः कलिसम्बन्धिन्याम् एकया सङ्ख्यया ऊना रहिता या नवतिस्तया उपेतं यत् शतानामष्टकं तेन भ्राट् भासमाना, या त्रिसहस्रिका सहस्रत्रयं, तस्यां



Scanned with CamScanner

त्रयाणां सहस्राणां समाहारस्त्रिहस्री, सैव त्रिसहस्रिकेति । स्वार्थे कः । केण इति ह्रस्वः । गतायां सत्याम् । एकोननवत्युत्तराष्टशत्युपस्कृतत्रिसाहस्र्यां (३८८९) गतायां सत्यामित्यर्थः। विभवाब्दस्य विभवसंवत्सरस्य यो राधो वैशाखमासस्तस्य सिते शुक्लपक्षे दशम्याम् अयं वरदातृत्वेन बुद्ध्यारूढः शिवः धरण्यां भूमौ, उदभूत् आविर्भबूव ।

तथा च स्कान्दे शिवरहस्ये-

कल्यादिमे महादेवी सहस्रत्रितयात्परम् ।
प्रत्यक्षवादकुशलाः शल्यभूताः कलौ युगे ।।
तेषामुत्पाटनार्थाय सृजामीशे मदंशतः ।
भविष्यति महादेवि शङ्कराख्यो द्विजोत्तमः ।। इति ।

अभियुक्तैरपि -

निधिनागेभवह्न्यब्दे (३८८९) विभवे मासि माधवे ।
शुक्लपक्षे दशम्यां तु शङ्कराख्योदयः स्मृतः ।। इति ।

स्कान्दानुसरणमाधवीये शङ्करविजये -

एकदा देवता रूप्याचलस्थमुपतस्थिरे ।
देवदेवं तुषारांशुमिव पूर्वाचलस्थितम् ।।
प्रसादानुमितस्वार्थसिद्धयः प्रणिपत्य यम् ।
मुकुलीकृतहस्ताब्जा विनयेन व्यजिज्ञपन् ।।
विज्ञातमेवं भगवन् विद्यते यद्धिताय नः ।
वञ्चयन् सुगतान् बुद्धवपुर्धारी जनार्दनः ।।
तत्प्रणीताग्रमालम्बैर्बौद्धैर्दर्शनदूषकैः ।
व्याप्तेदानीं प्रभो धात्री रात्रिः सन्तमसैरिव ।।
श्रुतेऽपि दधति श्रोत्रे क्रतुरित्यक्षरद्वये ।
क्रियाः कथं प्रवर्तेरन् कथं क्रतुभुजो वयम् ।।
तद्भवान् लोकरक्षार्थमुत्साद्य निखिलान् खलान् ।
वर्त्म स्थापयतु श्रौतं जगद्येन सुखं व्रजेत् ।।
इत्युक्त्वोपरतान् देवानुवाच गिरिजाप्रियः ।



Scanned with CamScanner

मनोरथं पूरयिष्ये मानुष्यमवलम्ब्य वः ।।

यतीन्द्रः शङ्करो नाम्ना भविष्यति महीतले ।

मद्वृत्तया भवन्तोऽपि मानुषीं तनुमाश्रिताः । (८१)

तं मामनुसरिष्यन्ति सर्वे त्रिदिववासिनः ।।

भवन्मनोरथः पूर्णो भविता स्यान्न संशयः ।

इत्युपक्रम्य ततो महेशः किल केरलेषु इत्यादिना

मूर्धनि हिमकरचिह्नं निटिले नयनाङ्कमंसयोः शूलम् ।

वपुषि स्फटिकसवर्णं प्राज्ञास्तं मेनिरे शम्भुम् ।।

इत्युपसंहृतम् । विस्तरस्तु माधवीये शङ्करविजये द्रष्टव्यः ।। ७ ।। मूलम् -

**नाम्ना सुतं शङ्करमेष चक्रे प्रापायमाद्ये गिरमक्षराणि ।**

**प्रदत्तपुस्तं न्यपठीद् द्वितीये काव्यान्यलोकिष्ट शिशुस्तृतीये ।। ८।।**

व्याख्या - नाम्नेति । एष शिवगुरुनामा पिता, सुतं पुत्रं, नाम्ना शङ्करं चक्रे । अयं शिशुः शङ्करः, आद्ये प्रथमवर्षे, गिरं वाचं अक्षराणि च, प्राप लेभे । द्वितीये वर्षे, प्रदत्तं जनैरिति शेषः। पुस्तं पुस्तकं, न्यपठीत् पपाठ । तृतीये वर्षे काव्यानि गद्यपद्यप्रबन्धान्, अलोकिष्ट अद्राक्षीत्, पपाठेति यावत् । तदुक्तं माधवीये -

यत्पश्यतां शिशुरसौ कुरुते शमग्र्यं

तेनाकृतास्य जनकः किल शङ्कराख्याम् । इत्यादिना

अथ स काव्यपुराणमुपाशृणोत्

स्वयमवैत्किमपि श्रवणं विना ।।

इत्यन्तेनोपसंहृतम् । अत्र मूले विशेष्यवाचकवर्षपदप्रयोगाभावात्कथमाद्यादिपदैर्वर्षपरिग्रह इति चेत् । अत्राग्रिमश्लोकगतात् तृतीयवर्षेण इति मूलकृतः प्रयोगाद्वर्षप्रतीतिसम्भवेन वर्षपर्यन्तानुधावनमिति गृहाण ।। ८ ।। मूलम् -

**तृतीयवर्षेण समं गतेऽस्य ताते समाप्तिं शिवगुर्वभिख्ये ।**

**निर्वर्त्य माता विमलाब्ददीक्षां तं पञ्चमे द्रागुपनीतमाधात् ।। ९ ।।**

व्याख्या - तृतीयेति। अस्य शङ्करगुरोः, शिवगुर्वभिख्ये ताते पितरि, तृतीयवर्षेण समं समाप्तिं गते सविधिकर्तव्यभर्तृदीक्षां, निर्वर्त्य कृत्वा, द्राक् शीघ्रमविलम्बिनेति यावत् ।



Scanned with CamScanner

(८२) तं शङ्करगुरुं, पञ्चमे पञ्चमवर्षे, उपनीतं उपनयनसंस्कारवन्तम्, आधात् चकार । तदुक्तम् -

शिवगुरुः स जरंस्त्रिसमे शिवावमृत कर्मवशः स्तुतमोदितः।
उपनिनीपितसूनुरपि स्वयं न हि यमोऽस्य कृताकृतमीक्षते। इत्या०।

स्कान्देऽपि -

पिता शिवाभिधस्तस्य तृतीयेऽब्दे मरिष्यति । इति ।। ९ ।। मूलम् -

**बटुर्गुरुं प्राप्य स पञ्चमाब्दे त्वाषष्ठमध्यैष्ट समस्तविद्याम् ।**
**अयं गृहं प्राप्य स सप्तमाब्दे पूर्णां जनन्यै गृहसीम्न्यतानीत् ।। १० ।।**

व्याख्या - बटुरिति । स वटुः शङ्करगुरुः पञ्चमाब्दे गुरुम् उपाध्यायं प्राप्य आषष्टं षष्ठवर्षपर्यन्तं, समस्तविद्या अध्यैष्ट अधीतवान् । सोऽयं शङ्करगुरुः सप्तमाब्दे गृहं प्राप्य जनन्यै मात्रर्थं पूर्णां पूर्णानदीं गृहसीम्नि अतानीत् अकरोत् । तदुक्तं माधवीये अधिजगे इत्यादिना ।। १० ।। मूलम् -

**आज्ञामथो संन्यसने जनन्याः सम्प्राप्य निर्यन् गृहतोऽष्टमाब्दे ।**
**गोविन्दनाथाद्यतितां प्रपद्य वाराणसीं प्राप किलाष्टमान्ते ।। ११ ।।**

व्याख्या - अथो एवममानुषकर्मप्रकाशानन्तरम्, संन्यसने संन्यासविषये, जनन्याः आज्ञां संप्राप्य गृहतः गृहात्, निर्यन् निर्गतः, शङ्करगुरुः अष्टमाब्दे गोविन्दनाथात् यतितां सन्यासित्वं, प्राप्य अष्टमान्ते अष्टमवत्सरान्ते, वाराणसीं काशीं, प्राप लेभे किल । तथा च स्कान्दे शिवरहस्ये -

ततो मातरमामन्त्र्य परिव्राट् स भविष्यति ।
मद्दत्तविद्यया देवि विराजति शशाङ्कवत् ।।
अद्वैतोच्छेदकान् पापानुच्छिद्याक्षिप्य तर्कतः ।
स्वमतानुगतान् देवि करिष्यति निरर्गलम् ।। इति ।

तदुक्तम् -

सृणिना करिणीव सार्दिता शुचिना शैवलिनीव शोषिता ।
मरुता कदलीव कम्पिता मुनिवाचा सुतवत्सलाभवत् ।।
अथ शोकपरीतचेतनां द्विजराडित्थमुवाच मातरम् ।



Scanned with CamScanner

Scanned with CamScanner

अवगम्य च संस्कृतिस्थितिं किमकाण्डे परिदेवना तव ।।

इत्यादिना आपगानिकटहाटकचञ्चद्यूपपङ्क्तिसमुदञ्चितशोभाम् ।।

इत्यन्तेन ।। ११ ।। (८३) मूलम् -

**विष्ण्वंशसम्भूतसनन्दनोऽयं वाराणसीं प्राप्य गुरुं विलोक्य ।**

**संन्यासितां प्राप गुरोः सकाशाद्यं पद्मपादं प्रवदन्ति सन्तः ।। १२ ।।**

व्याख्या - इतः पद्मपादाचार्यसंन्यासादिकमाह - विष्ण्विति । अयं विष्णोरंशात्सम्भूतो जातः सनन्दनो बटुः, वाराणसीं काशीं, प्राप्य गुरुं शङ्कराचार्यं, विलोक्य दृष्ट्वा, गुरोः सकाशात् सन्यासितां यतितां, प्राप लेभे। लोका जनाः, यं सनन्दनं, पद्मपादं आचार्यानुग्रहलब्धपद्मपादनामानं, प्रवदन्ति। अयमिति पूर्वेण सम्बन्धः । तदुक्तं माधवीये शङ्करविजये - आगत्य देशिकपदाम्बुजयोः इत्यादिना । तस्य पद्मपादापरनामधेयस्य सनन्दनगुरोर्नारायणांशत्वे स्कान्दगतबदरिकाश्रममाहात्म्ये सनत्कुमारवचनम् -

समुद्रतीरे विद्योतत्कले विष्णुमहीशयोः ।
अत्र नारायणं देवं त्वत्तीर्थादुद्धरिष्यति ।। इति ।

समुद्रतीरे दक्षिणसमुद्रप्रान्ते चोलकेरलदेशयोः समुत्पन्नौ विष्णुमहेशयोः कले अंशभूतौ, पद्मपादशङ्करौ अत्र बदर्याश्रमे त्वत्तीर्थात् नारदाभिधत्वदीयतीर्थात् नारायणं देवं उद्धरिष्यतः ऊर्ध्वं नेष्यत इति तदर्थः । माधवोऽप्याह तृतीयसर्गे - कमलानिलयः कलानिधेः इत्यादि ।। १२ ।। मूलम् -

**वैधायुरन्तो भवितेति शम्भोरागत्य दृष्ट्वा किल शङ्करार्यम् ।**

**अब्दाष्टकं लोकहिताय तस्मै दत्त्वायुरन्तर्धिमियाय तूर्णम् ।। १३ ।।**

व्याख्या - वैधेति । शम्भुः वैधस्य विधिसम्बन्धिनः, आयुषः अष्ट वर्षात्मकजीवितकालस्य, अन्तः अवसानं, भविता दिनेऽस्मिन् भविष्यतीति मत्वेत्यर्थः । अवगत्य शङ्करार्यं दृष्ट्वा तस्मै शङ्करगुरवे, लोकहिताय अब्दाष्टकं अष्टवर्षात्मकं, आयुः दत्त्वा तूर्णं शीघ्रम्, अन्तर्धिमन्तर्धानम्, इयाय प्राप । (८४) इण् गतौ । कर्तरि लिट् । तदुक्तं माधवीये - शङ्करो दिवसमध्यमभागे इत्यादिना विस्मितेन मनसा सह शिष्यैः शङ्करोऽपि सुरसिन्धुम् अयासीत् ।। इत्यन्तेन ।। १३ ।। मूलम् -

**ततो बदर्याश्रममेत्य योगी विचार्य वेदान्तमयं मुनीन्द्रैः ।**



Scanned with CamScanner

**स द्वादशेऽब्दे विरचय्य भाष्याण्युपेयिवान् शम्भुपुरीं मनोज्ञाम् ।। १४ ।।**

व्याख्या - तत इति । ततः शिवान्तर्धानानन्तरम् । सः अयं योगी शङ्करगुरुः, बदर्याश्रमम् एत्य प्राप्य, मुनीन्द्रैः सहेत्यर्थं वृद्धो यूनेति निर्देशात् सहार्थकशब्दयोगाभावेऽपि तृतीया । वेदान्तम् उपनिषत्काण्डं, विचार्य निर्मन्थ्येत्यर्थः । द्वादशेऽब्दे भाष्याणि विरचय्य निर्माय, मनोज्ञां मनोहरां, शम्भुपुरीं काशीं, उपेयिवान् प्राप्तवान् ।। तदुक्तम् -

शान्तां दिशं देवनृणां विहाय इत्यादिना फणति स्म भाष्यम् ।

इत्यन्तेन ।। १४ ।। मूलम् -

**आषोडशान्तं स्वकृतानि भाष्याण्यध्यापयन्पद्मपदादिशिष्यान् ।**
**समागतं व्यासमहर्षिमायुरन्ते द्विजाकारमयं विजिग्ये ।। १५ ।।**

व्याख्या - आषोडशान्तमिति । आषोडशान्तम् - षोडशो यो वत्सरस्तत्पर्यन्तं पद्मपादादिशिष्यान् स्वकृतानि भाष्याणि अध्यापयन् पाठयन्, अयं शङ्करगुरुः, आयुरन्ते षोडशवत्सरीयान्तिमदिने इत्यर्थः । समागतं द्विजाकारं ब्राह्मणरूपं, महर्षिं व्यासं, विजिग्ये जितवान्, वादे इति शेषः । जि अभिभवे कर्तरि लिट् । विपराभ्यां जेरिति तङ्, सन् लिटोर्जेः इति कुत्वम् । तदुक्तं शिवरहस्ये स्कान्दे -

मिश्राः शास्त्रार्थकुशलास्तर्ककर्कशबुद्धयः ।
तेषामुद्बोधनार्थाय तिष्ये भाष्यं करिष्यति ।
अविमुक्ते समासीनं व्यासं वादे विजेष्यत ।। इति ।

माधवीये - अथ व्रती इत्यादिना किं करणीयमस्ति इत्यन्तेन ।। १५ ।। (८५)

मूलम् -

**दत्त्वा ततः षोडशकं समानां जहि क्षमाकण्टकनास्तिकादीन् ।**
**इतीरयित्वा यतिसार्वभौममन्तर्हितः सत्यवतीतनूजः ।। १६ ।।**

व्याख्या - दत्त्वेति । ततो जयानन्तरं, सत्यवतीतनूजो व्यासमहर्षिः, समानां वत्सराणां, षोडशकं दत्त्वा क्षमाकण्टका ये नास्तिकादयस्तान् जहि इत्येवं प्रकारेण यतिसार्वभौमं यतिकुलचक्रवर्तिनं शङ्करगुरुं प्रति ईरयित्वा उक्त्वा अन्तर्हितोऽदृश्योऽभूत् । तदुक्तम् - मुहूर्तमात्रं मणिकर्णिकायाम् इत्यादिना तत्तादृशां कथमहो विरहो विषह्यो इत्यन्तेन ।। १६ ।।

मूलम् -



Scanned with CamScanner

**दुर्वाससः शापवशावदवन्यां वाणीं प्रजानां परिणीतवान्यः ।**
**जिगाय तं मण्डनपण्डितं द्राक् माहिष्मतीमण्डनमार्यवर्यः ।। १७ ।।**

व्याख्या - सम्प्रति मण्डनमिश्रजयमाह - दुर्वासस इति । यः मण्डनपण्डितः, दुर्वाससस्तन्नामकमहर्षेः, शापवशात् अवन्यां प्रजातां वाणीं शारदां, परिणीतवान् विवाहितवान्। आर्यवर्यः शङ्करगुरुः, माहिष्मत्यास्तन्नामकपुर्याः, मण्डनमलङ्कारभूतं, तं मण्डनपण्डितं, द्राक् शीघ्रमनायासेनेति यावत् । जिगाय जितवान् ।। १७ ।। मूलम् -

**प्रविश्य देहं परकीयमार्यो विज्ञाय कन्दर्पकलादिकानि ।**
**लब्ध्वा पुनः स्वान्तनुमेत्य वाणीं जिगाय सन्धादिनमध्य एव ।। १८ ।।**

व्याख्या - न केवलं मण्डनपण्डितजयेन जयी यतोऽहमर्धाङ्ग्यस्मी त्युक्तवतीं तद्भार्यां वाणीमपि जितवानित्याह - प्रविश्येति । आर्यः शङ्करगुरुः परकीयमन्यदेहम् अमरुकाख्यराजसम्बन्धिनं देहम् मृतदेहं प्रविश्य कन्दर्पकलादिकानि सरस्वतीपृष्टकामिनीयकामकलादीनि, विज्ञाय ज्ञात्वा, पुनः स्वां स्वीयां, तनुं देहं, लब्ध्वा वाणीम् एत्य प्राप्य, सन्धादिनमध्ये मासात्मकप्रतिज्ञा दिनमध्ये एव जिगाय जितवान् ।।

पुरा किल महेश्वराज्ञया कर्मकाण्डोद्धारणाय(८६) धरण्यां कृतावतरणो ब्रह्मात्मा मण्डनपण्डितो माहिष्मतीपुरवास्तव्यः ब्रह्मणि मुनिष्वधीयानेषु तत्र दुर्वाससः स्वरस्खालित्यं गतवतः सम्बन्धिना हसनहेतुकशङ्करदर्शनावधिकशापेनावनौ कृतावतारां भारतीं परिणीयात्मानमुत्सृजन् कर्माण्येव वितन्वन् अन्वातिष्ठत । तस्मिंश्च भट्टपादशिष्ये मण्डने भगवत्पादैः जिते स्वाजयेन तं पतिमजितं मन्वाना भारती वादे तमजेयं मत्वा कामकलादीन् अन्वयुङ्क्त । सोऽपि गुरुर्मासमवधीकृत्य प्रविश्य मृतस्यामरुकराजस्य कळेवरे कामागममवबुद्ध्य समागत्य तामजयदिति कथात्रानुसन्धेया । उपबृंहकवचनानि तु विस्तरभिया नात्र प्रपञ्चितानि ।।१८ ।। मूलम् -

**सन्त्यक्तवित्तात्मजदारकाङ्क्षं सन्न्यासिनं मण्डनमारचय्य ।**
**सुरेश्वराख्यां च वितीर्य तस्मा अध्यापिपद् भाष्यमुखानि तं सः ।। १९ ।।**

व्याख्या - मण्डनस्य सन्न्यासमाह - सन्त्यक्तेति । सः शङ्करगुरुः, सन्त्यक्ता वित्तात्मजदारेषु काङ्क्षा येन तं मण्डनं, सन्न्यासिनम् आरचय्य कृत्वा, तस्मै मण्डनाय, सुरेश्वर इत्याख्यां नाम,



Scanned with CamScanner

च वितीर्य दत्त्वा, तं मण्डनं, भाष्यमुखानि निबन्धनानीति शेषः । अध्यापिपत् अध्यापयामास ।। १९ ।। मूलम् -

**शापान्तमालोक्य निजाश्रयाय यान्तीं निरुध्याम्ब मया प्रक्लृप्ते ।**
**बिम्बे विधेया खलु सन्निधिस्ते सदेति वाणीं निजगौ यतीन्द्रः ।। २० ।।**

शापेति । शापान्तं शापावसानम्, आलोक्य निजाश्रयाय सत्यलोकाय, यान्तीं गच्छन्तीं, वाणीं भारतीं, निरुध्य वनदुर्गामन्त्रेणेति शेषः । हे अम्ब, प्रक्लृप्ते प्रतिष्ठिते, बिम्बे ते त्वयेति सम्बन्धसामान्ये षष्ठी । सन्निधिः सान्निध्यं, विधेया कार्या । इति यतीन्द्रः शङ्करगुरुः, निजगौ जगाद । गै शब्दे, कर्तरि लिट् ।। २० ।। (८७) मूलम् -

**अङ्गीकृताचार्यवचस्यमुष्यां वाण्यां तिरोधानजुषि प्रमोदात् ।**
**क्रमादयं श्रीबलिनामकाग्रहारं ययौ पण्डितमण्डनाढ्यम् ।। २१ ।।**

व्याख्या - अङ्गीकृतेति । अङ्गीकृतमाचार्यवचो यया तस्याम् अमुष्यां वाण्यां, प्रमोदात् हर्षतः, तिरोधानजुषि अन्तर्धानं गतायां सत्यां, पण्डितमण्डलाढ्यं श्रीबलिनामकाग्रहारं क्रमात् ययौ प्राप । तदुक्तम् -

श्रयति स्म ततोऽग्रहारकं श्रीबलिसंज्ञं स कदाचन स्वशिष्यैः इति ।। २१ ।। मूलम् -

**प्रभाकरः संयमिचक्रवर्तिसमागमं लोकमुखान्निशम्य ।**
**समेत्य भूताहतमात्मजं स्वं समर्पयामास महागुरुभ्यः ।। २२ ।।**

व्याख्या - ततो हस्तामलकसन्न्यासं विवक्षुराचार्येभ्यः प्रभाकरकृततत्समर्पणे कारणमाह - प्रभाकर इति । श्रीबलिनामकाग्रहारवास्तव्यः प्रभाकरः लोकमुखात् संयमिचक्रवर्तिनः शङ्करगुरोः समागममागमनं निशम्याकर्ण्य समेत्य गुरुसमीपं प्रत्यागत्य भूताहतम् भूतग्रस्तमिव स्थितमित्यर्थः। स्वं स्वकीयं आत्मजं पुत्रं महागुरुभ्यः समर्पयामास । तदुक्तम् - तत्र द्विजः कश्चन शास्त्रवेदी इत्यादिना, चोपनयं कथञ्चिदिति ।। २२ ।। मूलम् -

**प्रच्छन्नमात्मीयविवेकमेष प्राकाशयद्योगिवराङ्घ्रिपद्मे ।**
**सन्न्यासिनं तं विरचय्य नाम्ना चकार हस्तामलकं यतीन्द्रः ।। २३ ।।**

व्याख्या - प्रच्छन्नमिति । एष प्रभाकरसूनुः, प्रच्छन्नं निगूढम्, आत्मीय विवेकं योगिवरस्य शङ्करगुरोरङ्घ्रिपद्मे प्राकाशयत् प्रकाशयति स्म । यतीन्द्रः शङ्करगुरुः, तं बालं, सन्न्यासिनं विरचय्य कृत्वा, नाम्ना हस्तामलकवत्परतत्त्वं प्रकाशयतीति हस्तामलकस्तथोक्तं चकार ।



Scanned with CamScanner

तदुक्तं माधवीये - इतीरयित्वोपरते च विप्रे इत्यादिना, कियत्प्रदेशं स्थिरधीर्बहुश्रुतः इत्यन्तोक्तश्लोकानामर्थोऽत्रानुसन्धातव्यः ।। २३ ।। (८८) मूलम् -

**क्रमात्ततः शृङ्गगिरिं प्रपद्य स्थितं गिरिः कश्चन तं सिषेवे ।**

**सन्न्यासिनं तं विरचय्य तस्य कृतिं व्यधात्तं च स तोटकाख्यम् ।। २४ ।।**

व्याख्या - गिर्यपरनामधेयस्य तोटकाचार्यस्य सन्न्यासादिकमाह - क्रमादिति । श्रीबल्यग्रहारात् शृङ्गगिरिं प्रपद्य गत्वा, स्थितं तं शङ्करगुरुं, गिरिः गिरिनामकः, कश्चन बटुः, सिषेवे सेवते स्म । सः शङ्करगुरुः, तं बटुं, सन्न्यासिनं विरचय्य तस्य कृतिं तोटकाख्यं व्यधात् अकरोत् । कृतिं तोटकाख्यां तं च तोटकाख्यं चक्रे इति लिङ्गव्यत्यासेन योज्यम्। तदुक्तम् - ततः शतानन्दमहेन्द्रपूर्वैः इत्यादिना,

पद्मपादसदृशप्रतिभावान्मुख्यशिष्यपदवीमपि लेभे ।

इत्यन्तोक्तश्लोकानामर्थोऽत्रानुसन्धेयः ।। २४ ।। मूलम् -

**निर्माय देवालयमत्र योगी वाणीं प्रतिष्ठापितवान्महात्मा ।**

**याऽद्यापि तत्रात्मकलाभिपूर्णा गृह्णाति लोकै रचितां सपर्याम् ।। २५।।**

व्याख्या - निर्मायेति । महात्मा महानुभावः, योगी शङ्करगुरुः, अत्र शृङ्गगिरौ, निर्माय कृत्वा, वाणीं शारदां, प्रतिष्ठितवान् या शारदा तत्र शृङ्गगिरौ, आत्मनः कलाभिरंशैः, अभिपूर्णा सती लोकैः जनैः, रचितां सपर्यां पूजां, गृह्णाति स्वीकरोति ।

तदाह शिवरहस्यम्-

दुर्वासःशापतो भूमौ जातां वाणीं विजित्य ताम् ।
अगस्त्यचरिते देशे तुङ्गातीरे सुनिर्मले ।।
पुण्यक्षेत्रे द्विजवर स्थापयित्वा सुपूजय ।
यत्रास्ते ऋष्यशृङ्गस्य महर्षेराश्रमो महान् ।। इति । तत्रैव -

वाणीं स जित्वैव तु तां मठे स्वे शृङ्गाद्रिकाख्ये प्रणिवेश्य तुष्टः

इति च । अन्यान्यपि शङ्करविजयादिभ्योऽवगन्तव्यानि ।। २५ ।। मूलम् -

**प्रत्यग्दृशा मातृरुजं विदित्वा स निर्गतः शृङ्गगिरेः खसृत्या ।**

**समेत्य कालट्यभिधाग्रहारं मातुर्ववन्दे चरणाब्जयुग्मम् ।। २६ ।।**

व्याख्या - प्रत्यग्दृशेति। स शङ्करगुरुः, प्रत्यग्दृशा ज्ञानदृष्ट्या, मातुः रुजं रोगं,



Scanned with CamScanner

Scanned with CamScanner

विदित्वा ज्ञात्वा, शृङ्गगिरेः सकाशात् खसृत्या अन्तरिक्षमार्गेण, निर्गतः प्रस्थितः सन्, कालट्यभिधम् अग्रहारं समेत्य प्राप्य, मातुः विमला नाम्न्याः, चरणाब्जयुग्मं ववन्दे ननाम । इत आरभ्य श्लोकचतुष्टये उदाहर्तव्यप्रमाणानि इतश्चतुर्थे ' ये नादुरग्निम्' इति पद्यव्याख्यायामुदाहरिष्यन्ते ।। २६ ।। मूलम् -

**सुतोपदिष्टं परवस्तु कृत्वा हृदि प्रसूरत्यजदङ्गमस्य ।**

**गुरुः सनाभीन् दहनाय मातुरग्निं त्वयाचिष्ट न ते ददुस्तम् ।। २७ ।।**

व्याख्या - अस्य शङ्करगुरोः, प्रसूः माता, सुतेन उपदिष्टं परवस्तु हृदि कृत्वा अङ्गं देहम्, अत्यजत् । ततः किं वृत्तं तदाह - गुरुरिति । गुरुः शङ्करगुरुः, मातुः दहनाय सनाभीन् ज्ञातींस्तु, अग्निम् अयाचिष्ट याचितवान् । ते ज्ञातयः तं याचितमग्निं न ददुः न दत्तवन्तः ।। ।। २७ ।। मूलम् -

**निर्मथ्य मातुः किल दक्षबाहुमुत्पाद्य वह्निं गृहसीम्नि योगी ।**

**दग्ध्वा तनुं मातुरिमां क्रियाभिर्निन्ये प्रसूं सद्गतिमार्यकांक्ष्याम् ।। २८ ।।**

व्याख्या - निर्मथ्येति । योगी शङ्करगुरुः, मातुः दक्षबाहुं दक्षिणभुजं, निर्मथ्य मथित्वा, वह्निमग्निमुत्पाद्य गृहसीम्नि - गृहाङ्गणे इत्यर्थः । मातुः तनुं देहं, दग्ध्वा क्रियाभिः और्ध्वदैहिककर्मभिः, इमां प्रसूं मातरं, आर्यैः पुण्यात्मभिः, काङ्क्ष्यां अपेक्षणीयां, सद्गतिं निन्ये प्रापयामास । दुहादित्वाद् द्विकर्मकत्वम् ।। २८ ।। मूलम् -

**ये नादुरग्निं दहनाय तेषां शापं ददौ शङ्करदेशिकेन्द्रः ।**

**परासुदाहो गृह एव वोऽस्तु यूयं क्षितौ वेदबहिष्कृतास्त ।। २९ ।।**

व्याख्या - य इति । याचितामपि ये दहनाय अग्निं नादुः न दत्तवन्तः, शङ्कर इति दोशिकेन्द्रः (९०) आचार्यवर्यः, तेषाम् अदातॄणां शापं ददौ । शापक्रममाह - परास्विति । वो युष्माकं, गृह एव परासूनां मृतानां, दाहः अस्तु । यूयं तु क्षितौ वेदबहिष्कृताः वेदबाह्याः, स्त भवत । तदुक्तं माधवीये -

अधिगम्य तदात्मयोगशक्तेः इत्यादिना,

ततोऽन्यमतशातने प्रयतते स्म पृथ्वीतले

इत्यन्तेनोक्तानां श्लोकानामर्थोऽत्रानुसन्धेयः ।। २९ ।। मूलम् -

**प्रस्थातुकामे विजयाय चार्ये सनन्दनस्तीर्थकृते प्रयातः ।**



Scanned with CamScanner

**स्वभाष्यटीकां दहनादिकृत्यं स्वमातुलीयं न्यगदीदुपेत्य ।। ३० ।।**

व्याख्या - प्रस्थातुमिति । आर्ये शङ्करगुरौ, विजयाय दिग्विजयाय, प्रस्थातुं कामोऽभिलापो यस्य तथाभूते सति, तीर्थयात्रार्थं प्रयातो गतः । सनन्दनः पद्मपादाचार्यः, उपेत्य गुरुसन्निधिं प्राप्येत्यर्थः । स्वस्य स्वीयस्य, मातुलस्य मातुः भ्रातुः, सम्बन्धि स्वमातुलीयं, स्वस्य आत्मनः, सम्बन्धिन्या भाष्यटीकाया दहनादिकृत्यं आदिशब्देन विषप्रक्षेपणादिकं गृह्यते । न्यगदीत् जगाद। गद व्यक्तायां वाचि, कर्तरि लुङ् । अतो हलादेरिति वृद्धिविकल्पः ।। ३० ।।

मूलम्-

**या श्राविता सा किल पञ्चपादी गता न चास्मद्धृदयादिदानीम् ।**
**ब्रूमो लिखेत्यार्यवरे प्रजल्पत्ययं लिलेखार्यमुखोद्गतां ताम्।। ३१ ।।**

व्याख्या - येति । पुरा शृङ्गगिरौ या पञ्चपादी श्राविता,अस्मभ्यमिति शेषः । सा पञ्चपादी अस्माकं हृदयान्न गता इदानीं ब्रूमः लिख इति आर्यवरे शङ्करगुरौ, प्रजल्पति सति अयं पद्मपादाचार्यः, आर्यस्य पूज्यस्य शङ्करगुरोर्मुखादुद्गतां निर्गतां, तां पञ्चपादिरूपभाष्यटीकां, लिलेख । लिख अक्षरविन्यासे । कर्तरि लिट् । पुरा किल तीर्थयात्राकृते शङ्करभगवत्पादाज्ञामधिगत्य शृङ्गगिरेः सकाशाद्विनिर्गतः पद्मपादाचार्यः श्रीरङ्गप्रान्तस्थितपूर्वाश्रमीयस्वमातुलसदनमासाद्य स्वकृतशाङ्करभाष्यादि व्याख्यानानि प्रदर्शितानि च पुस्तकानि तत्सदने निक्षिप्य रामेश्वरं प्रति ययौ । स च प्रभाकरशिष्यस्तत्कृतटीकायां गुरुमतखण्डनादिकमुदीक्ष्यापि (९१) खण्डितुम् अशक्नुवानस्तैः पुस्तकैः समं स्वसदनमेवादहत्। ततः सेतुयात्रां विधाय समागताय भागिनेयाय वृत्तं सर्वमवादीच्च । पद्मपादोऽपि स्वपाण्डित्यमहिम्ना दग्धामपि स्वकृतटीकामगणयन् पुनरपि भाष्यव्याख्यां कर्तुमुपाक्रमत । मातुलस्तु तत्करणकौशलमालोक्य प्रतिक्रियान्तरमजानानस्तद्बुद्धिविनाशाय भिक्षायां विषं विन्यस्तवान्। तेन च प्रणष्टमनीषः पद्मपादाचार्यः पूर्ववत्प्रबन्धकरणपाटवमलभमानः शोचन् केरलदेशेषु सञ्चरन्तं शङ्करगुरुमुपेत्य वन्दित्वा सञ्जातमनर्थमेनमाचार्यभगवत्पादेभ्यो निवेदयामास । तं च पूर्वं पद्मपादविश्रावितां पञ्चपादीटीकां पद्मपादायाकथयत् । स च गुरुमुखोद्गतां तां स्वकृतव्याख्यामलिखदिति माधवीयचतुर्दशसर्गस्थितकथात्रानुसन्धेया ।। ३१ ।। मूलम् -

**दिशो जयन् संयमिसार्वभौमो गौडान् ययौ पण्डितपुङ्गवाढ्यान् ।**
**गङ्गातटस्थं किल शङ्करार्यं द्रष्टुं समागाद्गुरुगौडपादः ।। ३२ ।।**



Scanned with CamScanner

व्याख्या - इति दिग्विजयप्रसङ्गेन गौडदेशं प्राप्तस्य शङ्करगुरोः परमगुरुगौडपादसन्दर्शनादिकमाह त्रिभिः श्लोकैः दिश इति । संयमिनां सार्वभौमः शङ्करगुरुः, दिशः जयन् सन् पण्डितपुङ्गवैः पण्डितश्रेष्ठैः, आढ्यान् पूर्णान्, गौडान् गौडदेशान्, ययौ प्राप। गुरुः पूज्यो गौडपादस्तन्नामा मुनिः, गङ्गातटस्थं शङ्करार्यं द्रष्टुं समागात् आगतवान् किल ।। ३२ ।। मूलम् -

**स्वशिष्यशिष्यप्रणतो महात्मा श्रीगौडपादो यतिराजमूचे ।**

**माण्डूक्यगात्मीयसुकारिकाणां भाष्यं दिशालोक्य दिशामि तुभ्यम् ।। ३३ ।।**

व्याख्या - स्वेति । स्वस्य यः शिष्यो गोविन्दनाथस्तस्य शिष्येण शङ्करगुरुणा, प्रणतो नमस्कृतः, महात्मा महानुभावः, श्रीगौडपादः यतिराजं शङ्करगुरुम्, ऊचे जगाद । तदेवाह - माण्डूक्येति। माण्डूक्यगानां माण्डूक्योपनिषदनुसारिणीनां सुकारिकाणां भाष्यं, दिश देहि। आलोक्य तुभ्यं दिशामि ददामि । इति ऊचे, इति पूर्वेणान्वयः ।। ३३ ।। (९२) मूलम् -

**ततः प्रदत्तं गुरुशङ्करेण भाष्यं समालोक्य स गौडपादः ।**

**मुदं प्रपद्याशिषमस्य दत्त्वा यथागतं प्रस्थितवान् सशिष्यः ।। ३४।।**

व्याख्या - तत इति । ततः अनन्तरं, सः गौडपादः, गुरुशङ्करेण प्रदत्तं भाष्यं समालोक्य दृष्ट्वा, मुदं सन्तोषं, प्रपद्य गत्वा, अस्य शङ्करगुरोः, आशिषं दत्त्वा शिष्यैः सहितः सशिष्यः सन्, आगतमागमनमनतिक्रम्य यथागतं प्रस्थितवान् प्रयतोऽभवत् । श्लोकत्रयोक्तार्थे प्रमाणं माधवीये - स्वस्थः सोऽयं ब्रह्म सायं कदाचिद् इत्यादिना, क्षणदामनैषीत् इत्यन्तेनोक्तानां श्लोकानामर्थोऽत्रानुसन्धेयः ।। ३४ ।। मूलम् -

**ततः समासाद्य यतीश्वरोऽयं काश्मीरदेशं मुमुदे नितान्तम् ।**

**सर्वज्ञपीठं किल शारदाया यत्रास्ति विद्वज्जनरक्ष्यमाणम् ।। ३५ ।।**

व्याख्या - इतो द्वाभ्यां काश्मीरदेशगमनं तत्रत्यशारदासर्वज्ञपीठारोहणं चाह - तत इति। ततो गौडपादनिर्गमनानन्तरम्, अयं यतीश्वरः शङ्करगुरुः, काश्मीरदेशं समासाद्य लब्ध्वा, नितान्तमतिशयेन, मुमुदे सन्तुतोष । यत्र काश्मीरदेशे विद्वज्जनै रक्ष्यमाणं शारदायाः सर्वज्ञपीठम् अस्ति वर्तते । अस्तीति वर्तमानार्थकलट्प्रयोगादधुनापीत्यर्थो लभ्यते ।। ३५ ।। मूलम् -

**तत्रत्यविद्वज्जनतां स जित्वा वाणीं समाधाय विशुद्धवाचा ।**

**आरुह्य सर्वज्ञमहासनं तल्लेभे यशः शारदचन्द्रिकाभम् ।। ३६ ।।**



Scanned with CamScanner

Scanned with CamScanner

व्याख्या - तत्रत्येति । सः शङ्करगुरुः, तत्रत्यां काश्मीरस्थितां, विद्वज्जनतां विद्वज्जनसमूहं, जित्वा विशुद्धया वाचा न यतिदेहेन पापं नाचरितवानित्यादिकया परिशुद्धगिरेत्यर्थः । वाणीं शारदां समाधाय समाधानवतीं कृत्वा, तत्प्रसिद्धं सर्वज्ञमहासनं सर्वज्ञपीठम्, आरुह्य शरदि भवा या शारद्याश्चन्द्रिकाया (९३) ज्योत्स्नाया आभा कान्तिरिव कान्तिर्यस्य तत्तथोक्तं यशः कीर्तिं लेभे प्राप । तथा च स्कान्दे शिवरहस्ये -

काश्मीरमासाद्य स शारदायाः सर्वज्ञपीठं पदमारुरुक्षुः ।
तत्र स्थितां सम्प्रति सर्वपण्डितांश्चार्वाकमुख्यान् विपुलान् विजित्य ।।
स दक्षिणद्वाःस्थकवाटभेदं कृत्वा स देव्या विनिशङ्क्यमानः ।
शङ्कां निराकृत्य निविश्य पीठे ततो बदर्याश्रममाप दण्डी ।। इति ।

तदुक्तम् - वार्तामुपश्रुत्य इत्यादिना,

सम्भावितोऽभवदसौ विबुधैश्च वाण्यां
गार्ग्या कहोलमुखरैरिव याज्ञवल्क्यः ।

इत्यन्तोक्तश्लोकानामर्थोऽत्रानुसन्धेयः ।। ३६ ।। मूलम् -

**ततो बदर्याश्रममेत्य तत्र तीर्थात्समुद्धृत्य स नारदाख्यात् ।**
**नारायणं देवमयं यतीन्द्रः प्रपूज्य कैदारमियाय रम्यम् ।। ३७ ।।**

व्याख्या - तत इति । ततः सर्वज्ञपीठारोहाणानन्तरं, सः अयं यतीन्द्रः शङ्करगुरुः, बदर्याश्रमम् एत्य प्राप्य, तत्र बदरिकाश्रमे, नारदाख्यात् तीर्थात् नारायणं देवं समुद्धृत्य प्रपूज्य रम्यं कैदारं हिमवत्केदारं इयाय गतवान् । तदुक्तम् - इति मुनिरतितुष्टोऽध्युष्य सर्वज्ञपीठम् इत्ययं श्लोकार्थः माधवीये द्रष्टव्यः । इति । स्कान्देऽपि -

ततोऽहं यतिरूपेण तीर्थान्नारदसञ्ज्ञकात् ।
उद्धृत्य स्थापयिष्यामि मूर्तिं लोकहितेच्छया ।।

इति ।। ३७ ।। मूलम् -

**शीतार्तशिष्यव्रजरक्षणाय तप्तोदकं सोऽर्थयते स्म शम्भुम् ।**
**प्रावर्तयत्सोऽङ्घ्रितलात्तदम्भः प्रकाशतेऽद्यापि सरो यदीयम् ।। ३८ ।।**

व्याख्या - शीतेति । स शङ्करगुरुः, शीतेनार्तानां शिष्याणां व्रजस्य समूहस्य, रक्षणाय शम्भुं तप्तोदकम् उष्णोदकम्, अर्थयते स्म प्रार्थयामास । स शम्भुः, अङ्घ्रितलात्



Scanned with CamScanner

उष्णम् अम्भः उदकं, प्रावर्तयत् प्रवर्तयामास । अद्यापि यदीयमुष्णोदकसम्बन्धि सरः कुण्डमित्यर्थः, प्रकाशते भासते । केदारे इति शेषः । (९४)तदुक्तम् - वारिकाङ्क्षीश्वरोऽथापदुद्धारकम् इत्यादि समुदञ्चिततप्ततोयः इत्यन्तश्लोकार्थो माधवीये द्रष्टव्यः ।। ३८ ।। मूलम् -

**कालं कियन्तं क्षपयत्यमुष्मिंस्तत्राच्युताद्याः समुपेत्य देवाः ।**

**द्वात्रिंशदब्दा अभवन् महात्मन् धरां गते तस्य वदन् विनीताः ।। ३९ ।।**

व्याख्या - कालमिति । तत्र केदारे, अमुष्मिन् शङ्करगुरौ, कियन्तं कतिपयमित्यर्थः। कालं क्षपयति यापयति सति, अच्युताद्या विष्ण्वादयो देवाः समुपेत्यागत्य, विनीता नम्राः सन्तः, हे महात्मन् शङ्करगुरो, धरां भुवं, गतस्य तव द्वात्रिंशत् द्वात्रिंशत्सङ्ख्याका इत्यर्थः। अब्दा वत्सराः, अभूवन् इति अवदन् ऊचुः ।। ३९ ।। मूलम् -

**श्रीशृङ्गगिर्यादिमरम्यदेशेष्वाध्वं जगद्रक्षणबद्धचित्ताः ।**

**इत्थं सुरेशादिमनोज्ञशिष्यानादिश्य तूष्णीं क्षणमेष तस्थौ ।। ४० ।।**

व्याख्या - श्रीति । एष शङ्करगुरुः, हे शिष्याः श्रीशृङ्गगिर्यादिमेषु देशेषु जगद्रक्षणे बद्धं सम्बद्धं, चित्तं येषान्ते तथोक्ताः सन्तः आध्वं वसत, इत्थमेवं, सुरेशादीन् मनोज्ञान् रम्यान् शिष्यान् आदिश्य आज्ञाप्य, क्षणं क्षणमात्रं, तूष्णीं तस्थौ स्थितवान् आत्मानमनुसन्धातुं तूष्णीमवर्तत इति भावः ।। ४० ।। मूलम् -

**यद्दिग्जये साधनतामवाप तदेव रूपं गुरुशङ्करार्यः ।**

**गङ्गेन्दुसर्पालिकलोचनादि लिङ्गैरुपेतं व्यतनोत्क्षणेन ।। ४१ ।।**

व्याख्या - यदिति । यद्रूपमाकारः दिशां जये विषये साधनत्वं करणत्वम्, अवाप । गुरुशङ्करार्यः तदेव रूपं मनुष्यरूपं, क्षणेन गङ्गा च इन्दुश्च सर्पाश्च अलकलोचनं ललाटनेत्रं च गङ्गेन्दुसर्पालिकलोचनानि आदीनि येषां तथोक्तैः लिङ्गैश्चिह्नैः, उपेतं युक्तं अतनोत् अकरोत् । गङ्गाधरत्वचन्द्रमौलित्वफाललोचनत्वप्रमुखशिवचिह्नान्वितमतनोदिति यावत् । आदिशब्देन चतुर्भुजत्वडमरुत्रिशूलधारित्वादीनां परिग्रहः । अत्र यानि प्रमाणा न्युदाहर्तव्यानि तान्युत्तरश्लोकव्याख्यायामुदाहरिष्यन्ते ।। ४१ ।। (९५) मूलम् -

**हस्तं समालम्ब्य विधेर्महोक्षमारुह्य विष्णुप्रमुखैः स्तुतः सन् ।**

**हिमाद्रिकेदारतलात्प्रतस्थे कैलासमाकाशपथेन शम्भुः ।। ४२ ।।**

व्याख्या - हस्तमिति । शम्भुः शंङ्करगुरुरूपः शिवः, विधेः ब्रह्मणः, हस्तं समालम्ब्य



Scanned with CamScanner

Scanned with CamScanner

आश्रित्य, महांश्चासौ उक्षा वृषभश्च महोक्षस्तम् । अचतुर इत्यादिना निपातनादकारान्तत्वम्। आरुह्य विष्णुप्रमुखैः विष्ण्वादिभिः, स्तुतः सन् हिमाद्रिकेदारतलात् हिमवत्केदारप्रदेशात्, आकाशपथेन अन्तरिक्षमार्गेण, ऋक्पूः इत्यादिना अकारप्रत्ययः । कैलासं कैलासलोकं प्रति, प्रतस्थे प्रययौ। समवप्रविभ्यः स्थः(पा.सू.१.३.२२) इति तिष्ठतेरात्मनेपदम् । तदुक्तं स्कान्दे शिवरहस्ये नवमांशे षोडशाध्याये -

नारायणं तत्र तपज्जलौघकुण्डं प्रशीतस्य निवारणाय ।
ध्यात्वा शिवं तत्र निविश्य तस्थौ कैलासदेशाद्वृषभश्च देवाः ।।
समेत्य संस्तुत्य यदायुषस्ते कालोऽगमत्त्वं वृषभेऽधिरोह ।
इति प्रचीर्णः प्रभुरात्मनि स्वे विचिन्त्य शिष्यान् विजगाद मोदात् ।।
यूयं चतुर्दिक्षु मठेषु लिङ्गैः साकं मुदा संवसतेत्युदीर्य ।
निविश्य पृष्ठे वृषभस्य हस्तं सङ्गृह्य वैरिञ्चमथ प्रदत्तम् ।।
सर्वैश्च देवैरभिवन्द्यमानः स शंकरस्तं निजधाम देवः ।
विवेश कैलासनिवेशमच्छं स्वच्छन्दवृन्दारकवृन्दपूर्णम् ।।
तदादितः शंकरभाष्यमेतद् भूमौ जनं मुक्तिपथं ददाति ।। इति ।

माधवीये शङ्करविजये षोडशाध्यायेऽपि केदारमापेत्युपक्रम्य धाम नैजं प्रतस्थे इत्यन्तेनोक्तार्थोऽत्रानुसन्धेयः ।। ४२ ।। मूलम् -

**इयाय कैलासमयं महात्मा व्येकोनकाशीतिचतुःसहस्त्र्याम् ।**
**कलेर्गतायां किलशार्वरीयवैशाखराकाख्यदिने मनोज्ञे ।। ४३ ।।**

व्याख्या - सम्प्रति शङ्करगुरुकृतकैलासगमनकालमाह - इयायेति । अयं महात्मा शङ्करगुरुः, कलेः कलिसम्बन्धिन्याम्, एकेन ऊना एकोना सा चासावशीतिश्च एकोनकाशीतिः विगता एकोनकाशीतिर्यस्यास्तस्यां (९६) चतुर्णां सहस्राणां समाहारः चतुःसहस्री तस्यां व्येकोनकाशीतिचतुःसहस्र्यां गतायां सत्याम् । एकविंशत्युत्तरनवशत्युपस्कृतत्रिसाहस्र्यां गतायामित्यर्थः । मनोज्ञे शुभलक्षणलक्षितत्वेन मनोहरे, शार्वरीयः शार्वरवत्सरसम्बन्धी, यो वै वैशाखस्तस्मिन् यद्राकाख्यं पूर्णिमाख्यं दिनं, तस्मिन् कैलासम् इयाय प्राप ।

तदुक्तमभियुक्तैः -

भूनेत्रमण्यग्नियुते गते कलिशके शुभे ।



Scanned with CamScanner

Scanned with CamScanner

शार्वरे राधराकायां कैलासमगमच्छिवः ।। इति ।। ४३ ।। मूलम् -

**शिष्यास्तदीया अपि तत्र तत्र प्रकाशयन्तः किल शाङ्करीयम् ।**
**अद्वैतसिद्धान्तमिमां धरित्रीमकण्टकां संरचयाम्बभूवुः ।। ४४ ।।**

व्याख्या - शिष्या इति । तदीयाः शङ्करगुरुसम्बन्धिनः शिष्याः सुरेश्वराचार्यादयोऽपि तत्र तत्र स्वसञ्चारस्थलेष्वित्यर्थः । शाङ्करीयं शङ्कराचार्यनिरूपितम् अद्वैतसिद्धान्तं प्रकाशयन्तः सन्तः इमां धरित्रीं भुवम् अकण्टकां निष्कण्टकां निरुपद्रवामिति यावत्। संरचयाम्बभूवुश्चक्रुः ।। ४४।। मूलम् -

**सुरेश्वरः शृङ्गगिरिं बदर्याश्रमं गिरिर्द्वारवतीं पदाब्जः ।**
**लेभेऽथ हस्तामलको यतीन्द्रः क्षेत्रं जगन्नाथमियाय रम्यम् ।। ४५ ।।**

व्याख्या - श्रीशृङ्गगिर्यादिमदेशेष्वाध्वं जगद्रक्षणबद्धचित्ता इति यदाज्ञप्तं श्रीगुरुचरणैस्तत्र के क्व अवात्सुरित्याकाङ्क्षायामाह - सुरेश्वर इति । सुरेश्वरो मण्डनविश्वरूपापरपर्यायः सुरेश्वराचार्यः शृङ्गगिरिं लेभे प्राप । तोटकाचार्यापरपर्यायो गिरिः बदर्याश्रमं लेभे । सनन्दनापरपर्यायः पादाब्जः पद्मपादाचार्यः द्वारावतीं द्वारकां लेभे । अथ अनन्तरं विज्ञवर्मापरनामधेयो यतीन्द्रो यतिश्रेष्ठः हस्तामलकस्तन्नामकाचार्यः जगन्नाथं जगन्नाथनामकं क्षेत्रम् इयाय लेभे ।। ४५ ।।
(९७) मूलम् -

**जगति यतिवरेण्याद्वैतसिद्धान्तयुक्ते गलितविमतभेदाः पण्डितास्ते समस्ताः ।**
**शिवममुमहमीडे देवमित्यादि हित्वा जगदुरिति नमस्यान्मह्यमस्मै शिवाय ।। ४६ ।।**

व्याख्या - शङ्करभगवत्पादप्रतिष्ठितसनातनाद्वैततत्त्वविचारणेन सञ्जातां लोकमर्यादामुपपादयति । जगतीति । जगति यतिवरेण्यस्य शङ्करगुरोरद्वैतसिद्धान्तेन युक्ते सति समस्ताः ते प्रसिद्धाः नीलकण्ठभट्टभास्करोदयनाचार्याद्याः पण्डिताः गलितो निर्गतो विमतो विरुद्धो भेदो येभ्यः ते यथोक्ताः सन्तः अहम् अमुं शिवं देवमीडे स्तवीमि इत्यादि हित्वा स्तव्यस्तावकादिभेदावभासनादिति भावः । शिवाय शिवरूपाय अस्मै मह्यं नमः स्यात् इति जगदुः ऊचुः । जगदुरिति नितान्तं प्रत्यगात्मा शिवोऽहमिति नितान्तम् अतिशयेन ऊचुरिति तदर्थः ।। ४६ ।। मूलम् -

**यो वेङ्कटे शान्तिकसीम्नि हेम्नो यन्त्रं समाकर्षकमाततान ।**
**प्रदक्षिणे मेरुगिरेर्हनूमानुवाह यं शङ्करमेनमीडे ।। ४७ ।।**



Scanned with CamScanner

व्याख्या - आश्वासान्ते मङ्गलमाचरति य इति । यः शङ्करगुरुः वेङ्कटेशस्य अन्तिकसीम्नि समीपप्रदेशे हेम्नः सुवर्णस्य समाकर्षकं यन्त्रं भैरवेश्वरयन्त्रं आततान चक्रे । मेरुगिरेः प्रदक्षिणे शङ्करगुरुकर्तृके प्रदक्षिणकर्मणि हनूमान् मारुतिः यं शङ्करगुरुं उवाह वाहीभूय दधारेति यावत् । येन शङ्करगुरुं ईडे स्तौमि । ईड स्तुतौ कर्तरि लट् । तथोक्तं चित्सुखाचार्यैः -

स्वर्णाकर्षणभैरवेश्वरमहायन्त्रं यदा स्थापितं
शेषाद्रावधुनातिराजविजयस्थूणेव काशीतले ।
येन स्वर्णगिरिप्रदक्षिणविधौ वाहीकृतो मारुतिः
काञ्ची यत्प्रतिमाञ्चिता स भवतु श्रीशङ्करोऽस्मन्मुदे ।। इति ।। ४७ ।।

इति
श्रीमद्रघुनाथसूरिकृतमाणिक्यमञ्जरीव्याख्यायां
श्रीशङ्करभगवत्पाददिग्विजयो नाम द्वितीयः सर्गः ।।
श्रीसाम्बसदाशिवार्पणमस्तु ।।
श्रीरस्तु ।। (९८)






Scanned with CamScanner



# तृतीयः सर्गः

श्रीगणेशाय नमः । श्रीसरस्वत्यै नमः ।

**स्वाद्वैते शिथिले प्रतिष्ठिततमे शिष्यप्रभावात्पुन-**
**र्भूत्वा नूतनभेदवादिहतये विद्याद्यरण्यात्मना ।**
**योऽयं स्थापितवान् सनातनतमं धर्मं जगद्वन्दितः**
**श्रीमान् शङ्करदेशिकः कलयतां कल्याणजालं स नः ।। १ ।।**

व्याख्या - इतो वक्ष्यमाणसर्गद्वयेन निरूपणीयार्थं मङ्गलाचरणद्वारोपोद्घातयति स्वाद्वैते इति । तत्रादिमपादेन तृतीयसर्गकथोपोद्घातः द्वितीयतृतीयपादाभ्यां चतुर्थसर्गकथोपोद्घात इत्यवधेयम्। यः अयं शङ्करदेशिकः शिष्यस्य कलेः प्रभावात् सामर्थ्यात् प्रतिष्ठिततमे अतिशयेन पूर्वं प्रतिष्ठापिते स्वाद्वैते आत्मीयाद्वैतसिद्धान्ते शिथिले सति नूतनभेदवादिहतये कलिसञ्जाताद्वैतसिद्धान्त विध्वंसकमध्वाद्यभिनवद्वैतवादिविनाशाय विद्याद्यरण्यात्मना विद्यारण्यरूपेणेत्यर्थः । हिरण्यपूर्वं कशिपुमित्यादिवद्वाच्यवाचकयोरभेदविवक्षया निर्देशः । पुनः भूत्वा आविर्भूय सनातनतमम् अत्यन्तशाश्वतं धर्ममद्वैतसिद्धान्तरूपधर्मं स्थापितवान् ।

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थनमधर्मस्य तदात्मानं सृजाम्यहम् ।।

इति स्मरणात् इति भावः । अमुमेवार्थं शिवपुराणे कालीखण्डे लगुडेशोपाख्याने शङ्कराचार्यमाहात्म्य कथनावसरे सनत्कुमारो नारदं प्रत्याह -

मुहुर्मुहुः प्रणष्टस्य शास्त्रस्योद्धरणाय वै ।
श्रुतिस्मृत्यर्थबोधाय पाषण्डनिधनाय च ।।
सुराद्यभ्यर्थितो देवदेवोऽसौ भगवान् शिवः ।
अवतारांश्चकारात्र श्रुतिस्मृतिविभागकृत् ।। इति ।

श्रीर्विषम् अस्यास्तीति श्रीमान् शिवः तत्स्वरूप इत्यर्थः । जगद्वन्दितः स शङ्करदेशिकः नः अस्माकं कल्याणानां जालं समूहं कलयतां विधत्ताम् इति प्रार्थनायां लोट् । यदुक्तं मूलकृता



Scanned with CamScanner

नूतनभेदवादिहतय इति (९९) तत्र तावत् तदन्तर्गतमाध्वसिद्धान्तसम्प्रदायं सङ्क्षेपतो निरूपयामः। तथाहि - तत्त्वं तावद् द्विविधम् स्वतन्त्रम् अस्वतन्त्रं चेति। तत्र स्वतन्त्रो विष्णुः, अस्वतन्त्रा जीवाः । तदुक्तं तत्त्वविवेके -

स्वतन्त्रो भगवान् विष्णुर्निर्दोषोऽशेषसद्गुणः

इत्यादिना । ननु सजातीयविजातीयस्वगतभेदशून्यं ब्रह्मैव तत्त्वमिति प्रतिपादकेषु वेदान्तेषु जाग्रत्सु कथमशेषसद्गुणत्वं तस्य कथ्यते इति चेत्, मैवम् । भेदप्रमाणविरोधेन तेषां वेदान्तवाक्यानां तत्र प्रामाण्यानुपपत्तेः । प्रत्यक्षं तावत् - इदम् अस्मात् भिन्नमिति नीलपीतादि भेदमध्यक्षयति । अत एव गवार्थिनो न गवयदर्शनात्प्रवर्तन्ते । न च गोशब्दं स्मरन्ति । अनुमानेनापि भेदोऽवसीयते। परमेश्वरो जीवाद्भिन्नः तं प्रति सेव्यत्वात्, यः यं प्रति सेव्यः स तस्माद्भिन्नः, यथा भृत्याद्राजा इति । किञ्च, सुखं मे भूयात् न मनागपि दुःखमिति पुरुषार्थमर्थमर्थयमानाः पुरुषाः स्थपतिपदं कामयमानाः सन्तो न सत्कारभाजो भवन्ति किन्तु सर्वानर्थभाजनम् । यस्तु स्वस्य हीनत्वं स्वामिनस्तु गुणोत्कर्षं वर्णयति, तस्मै स्तावकाय प्रीतः स्तुत्योऽभीष्टं प्रयच्छति । तदाह -

घातयन्ति हि राजानो राजाहमितिवादिनः ।
ददत्यखिलमिष्टं च स्वगुणोत्कर्षशालिनाम् ।। इति ।

एवं च परमेश्वराभेदतृष्णया विष्णोर्गुणोत्कर्षस्य मृगतृष्णिकायमानत्वाभिधानं विपुलकदलीलाभेच्छया जिह्वाच्छेदनमनुहरति । एतादृशविष्णुद्वेषिणामन्धतमसः प्रवेशः प्रसज्यते तदेतत्प्रतिपादितं महाभारततात्पर्यनिर्णये -

अनादिद्वेषिणो दैत्या विष्णोर्द्वेषविवर्धिनः ।
तमस्यन्धे पातयन्ति दैत्यानन्ते विनिश्चयात् ।। इति ।

तस्मात् सेवकैरस्वतन्त्रैर्जीवैः सेव्यस्य भगवतः स्वतन्त्रस्य विष्णोः सेवैव कार्या। सा चाङ्कननामकरणभजनभेदात् त्रिधा । एतादृशसेवया सम्पादितो भगवत्प्रसादो मुक्तिः । सा च गुणोत्कर्षज्ञानादेव नाभेदज्ञानात् । न च तादात्म्यबोधकस्य तत्त्वमसीत्यादिवाक्यस्य व्याकोप इति वाच्यम् । श्रुतितात्पर्यापरिज्ञानादेवं हि श्रुत्यर्थः । तथा हि - स आत्मा तत्त्वमसीत्यत्र तच्छब्दस्य सादृश्ये लक्षणा । ततश्चेतनत्वरूपयत्किञ्चिद्धर्मवत्वेन त्वं तत्सदृशोऽसि न तु स्वातन्त्र्यादिगुणविशिष्ट इति । अथ वा स एवात्मा (१००) स्वातन्त्र्यादिगुणोपेतत्वात्, अतत् त्वमसि, त्वं तत् न भवसि तद्रहितत्वादित्येकत्वमतिशयेन निराकृतं भवति । यदाहुः-



Scanned with CamScanner

आह नित्यपरोक्षं तु तच्छब्दो ह्यविशेषतः ।
त्वच्छब्दश्चापरोक्षार्थस्तयोरैक्यं कथं भवेत् ।।
आदित्यो यूप इतिवत् सादृश्यार्थात्तु सा श्रुतिः ।
अतत्त्वमिति वा छेदस्तेनैक्यं सुनिराकृतम् ।। इति ।

तस्माज्जीवेश्वरयोर्भेद एवेति तत्ववादिरहस्यम् । इत्थं च सेवातारतम्यान्मुक्तितारतम्यं सिद्धम्। तदुक्तम् -

जीवस्य परमैक्यं च बुद्धं सारूप्यमेव वा ।
एकस्थाननिवेशो वा व्यक्तिस्थानमपेक्ष्य वा ।
न स्वरूपैकता (तस्य) तस्यापि (न) विरूपता । इति ।

परमा मुक्तिस्तु सामीप्यमेवेति तद्रहस्यम् । तत आह महोपनिषत् -

यथा पक्षी च सूत्रं च नानावृक्षरसा यथा ।
यथा चोरापहार्यो वा यथा पुंविषयावपि ।।
तथा जीवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ ।
वैलक्षण्यं तयोर्ज्ञात्वा मुच्यते बद्ध्यतेऽन्यथा ।।
ब्रह्मा शिवः सुराद्याश्च शरीरक्षरणात्क्षराः ।
लक्ष्मीरक्षरदेहत्वादक्षरातः परो हरिः ।।
स्वातन्त्र्यशक्तिविज्ञानसुखाद्यैरखिलैर्गुणैः ।
निःसीमत्वेन ते सर्वे तद्वशाः सर्वदेवताः ।।
विष्णुं सर्वगुणैः पूर्णं ज्ञात्वा संसारवर्जितः ।
निर्दुःखानन्दभुङ् नित्यं तत्समीपे स मोदते ।। इति ।

एतन्मतप्रक्रियानिराकरणं तु वक्ष्यमाणचतुर्थसर्गगतपञ्चदशषोडशत्रिनवतितमश्लोकव्याख्यासु करिष्यते । तत्र तन्मतखण्डनस्य प्रस्तुतत्वात् । तत्त्वमसीत्यादिवाक्यस्यास्मदीयाद्वैतसिद्धान्तार्थस्तु प्रथमसर्गगतजीवात्मनोरिति द्वितीयपद्यव्याख्यायामुपन्यस्त इति वेदितव्य इत्यलं पल्लवितेन ।। १ ।। मूलम् -

**विज्ञाय लोकाननतः प्रवृत्तिं शिवात्मकश्रीगुरुशङ्करस्य ।**
**क्रोधांशमूकांशकिटित्वमूलो मधुः शिवद्रोहमिति व्यतानीत् ।। २ ।।**



Scanned with CamScanner

व्याख्या - प्रथमसर्गे क्षत्रियगर्वनिबर्हणेन परशुरामेण समर्पितायाम् आसमुद्रपरिमुद्रितधरण्यामेकाधिपत्येन निवसद्भिः विप्रैर्भूतलादुच्चाटितसमुद्रवितीर्यमाणक्षोणीतले स्थितिमुपलभमानो भार्गवरामोऽनर्थनिधानं क्रोधं राक्षसो भवेति शप्तवान्। स च क्रोधो मूकाभिधदानवः सन् कदाचिद्वाराहरूपमासाद्येन्द्रकीलपर्वते (१०१) पार्थाश्रमे चचार । तं च कपटकिटिरूपं मूकं नाम दानवं किरातवेषधारी महेश्वरो जघान । ततो भगवति शिवे सञ्जातमत्सरोऽपि मूकनामा दानवः शिवं विजेतुमसमर्थो मधुरूपेण मन्मथमित्रतामधिगत्य स्वदौरवस्थ्यमखिलं निवेदयामास। सोऽपि मन्मथो जित्वा शिवं मनोरथं पूरयितुमशक्नुवानो विचिन्त्य क्षणं कलिं मनोरथपूरकं दर्शयामास । कलिरपि साक्षाच्छिवविजयो दुष्कर इति विचार्य शिवावतारभूतशङ्करप्रतिष्ठापिताद्वैतसिद्धान्तपरिपन्थिद्वैतमार्गप्रवर्तनमात्रेण शिवापकारं मन्वानो मधुमेवमाचष्ट । अस्मिन्नन्तरे भगवांश्चन्द्रार्धमूर्धावतारशङ्करो धरण्यामाविर्भूयाद्वैतं सिद्धान्तयिष्यते। तदा नास्माभिरवकाशो लप्स्यते । तत्कैलासगमनानन्तरं बहुतिथं कालम् अपनीय त्वं धरण्यामाविर्भूयाद्वैतपरिपान्थिनं द्वैतवादं प्रकाशय । मत्प्रकाशितवैष्णवतन्त्रमनुसृत्य तप्तचक्रधारणादीनि सिद्धान्तीकृत्य जनान् मोहयेति । एवं कलिनोपदिष्टो मधुः कल्युपदिष्टं कालं निरीक्षयाञ्चक्रे इति प्रतिपादितम् । द्वितीयसर्गेषु शङ्कराचार्यरूपेण धरण्यां कृतावतरणस्य शिवस्य पद्मपादादिशिष्यसम्पत्तिः शारीरकसूत्रभाष्यादीनां प्रणयनं दिग्विजयो देवतागणप्रार्थनया तद्रूपेणैव कैलासगमनं च निरूपितम् । सम्प्रति तृतीयसर्गे शङ्करकैलासगमनकालनिरीक्षणमनसा लीनस्य मधोर्मध्वरूपेण धरण्यामुत्पत्तिं तत्कृत दौरात्म्यं तन्निर्याणकालं च निरूपयिष्यन् आदौ तदीयदुश्चिन्तनमाह विज्ञायेति । क्रोधस्यांशो यस्मिन् स तथोक्तस्य मूकस्यांशो यस्मिन् तथोक्तस्य किटेर्वराहस्य भावः क्रोधांशमूकांशकिटित्वं तन्मूलं यस्य स तथोक्तः । मधुः लोकाननतो जन मुखात्, शिवात्मनः शिवरूपस्य, श्रीगुरोः शङ्करस्य, प्रवृत्तिं कैलासगमनवृत्तान्तं, विज्ञाय ज्ञात्वा, शिवद्रोहे मतिं व्यतानीत् अकरोत् ।। २ ।। मूलम् -

**आरभ्य मूलाद्यदि शुद्ध्यभावः सिध्येत्तदा कल्युदितोऽभ्युपायः ।**
**इत्यन्तरङ्गे कलयन् दुरात्मा सोऽन्वेषयामास कुलं हि दुष्टम् ।। ३ ।।** (१०२)

व्याख्या - आरभ्य इति । दुरात्मा स मधुः, मूलादादितः, आरभ्य उपक्रम्य, शुद्ध्यभावः यदि भवति, तदा कल्युदितः कलिनिरूपितः, अभ्युपायः सिद्ध्येत् इत्येवम् अन्तरङ्गे मनसि, कलयन् कुर्वन् सन्, दुष्टं कुलम् अन्वेषयामास मृगयति स्म, उत्पत्तुमिति शेषः



Scanned with CamScanner

Scanned with CamScanner

।। ३ ।। मूलम् -

**यं मद्यगेहं प्रवदन्ति तस्मिन् स्मार्ते रुजा दैववशे द्विजातौ ।**

**चिरानुभूतां व्यभिचारिणीतां भार्या विहातुं न शशाक तस्य ।। ४ ।।**

व्याख्या - यमिति । यं पुमांसं, मद्यं गेहे यस्य तमित्यन्वर्थसंज्ञा । विक्रेतुं गृहनिवेशितमद्यमित्यर्थः । मद्यस्य गेहं यस्य तम्, मद्यसम्बन्धिगृहशालिनमित्यर्थो वा । यद्वा, मद्यं गता मद्यगा ईहा इच्छा यस्य तम् । मद्याभिलाषिणमित्यर्थः । इच्छा काङ्क्षा स्पृहेहा तृट् इत्यमरः। अथवा मध्यगेहमिति पाठान्तरम् । मध्यं मध्यस्थं गता मध्यगा ईहा यस्य तम्, सन्तानार्थाभिलाषिमध्यवर्तिनं पत्न्यै जारसंयोजकमिति यावत् । इत्यन्वर्थं नाम प्रवदन्ति जना इति शेषः । अद्वैतमतानुवर्तिनां द्विजानां स्मार्ता इति सञ्ज्ञा दाक्षिणात्यानाम् । स्मार्ते अद्वैतिकुलजाते, द्विजातौ ब्राह्मणे, तस्मिन् मध्यगेहनाम्नि पुरुषे, रुजा रोगेण, दैववशे दैवाधीने, मृते सतीति यावत्। तस्य मध्यगेहस्य भार्या चिरानुभूतां भूयसा कालेन अनुभूतां, व्यभिचारिण्या भावो व्यभिचारिणीता तां, जारिणीत्वं विहातुं त्यक्तुं, न शशाक न शक्ता । भर्तरि मृतेऽपि जारैः सह क्रीडन्ती समतिष्ठतेति भावः । व्यभिचारितां तद्भार्या विहातुं न शशाक । दुष्टा इति क्वचित्पाठः। तदा दुष्टा तस्य भार्या चिरानुभूतां व्यभिचारितां व्यभिचारीति पदसंस्कारपक्षे सामान्ये नंपुसकम् इत्यनुशासनेन नंपुसकम् । व्यभिचारिणी त्यर्थः । तस्य भावस्तत्ता तामिति ज्ञेयम् ।। ४ ।।

(१०३) मूलम् -

**विभर्तृकेयं जननीपदार्हे चालोच्य जाराज्जठरं तदीयम् ।**

**धात्वात्मना प्राविशदादरेण मधुः स गर्भो ववृधे क्रमेण ।। ५ ।।**

व्याख्या - विभर्तृकेति । मधुः विगतो भर्ता पतिर्यस्याः सा विभर्तृका विधवा, नद्यृतश्चेति कप् । इयं स्त्री, जनन्याः पदे स्थाने, पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु इत्यमरः । अर्हा योग्या इत्यालोच्य आदरेण जारात् तदीयं विधवासम्बन्धि, जठरमुदरम्, धात्वात्मना जाररेतोरूपेण, प्राविशत् प्रविशति स्म । स गर्भः क्रमेण क्रमात् ववृधे अवर्धत ।। ५ ।। मूलम् -

**मणीन्दुनेत्राब्धिकलौ गतेऽस्मिन् खवेदखोर्वीयुतशालिवाहे ।**

**विलम्बिनः शुच्यसिताब्धितिथ्यां साऽसूत योषा विधवा तनूजम् ।। ६ ।।**

व्याख्या - मणीति । मणयो नव, इन्दुरेकः, नेत्रे द्वे, अब्धयश्चत्वारः तैर्युते कलाविति मध्यमपदलोपः समासः । अङ्कानां वामतो गतिरिति नियमा देकोनविंशत्युत्तरशतद्वयोपस्कृतचतुः



Scanned with CamScanner

Scanned with CamScanner

सहस्रीपरिमितकलौ गते सतीत्यर्थः । खं शून्यं, वेदाश्चत्वारः, खं शून्यम्, उर्वी एका, ताभिर्युते शालिवाहे गते सति, चत्वारिंशदुत्तरसहस्रीमितशालिवाहनशके गते सतीत्यर्थः । विलम्बिनो विलम्बिवत्सरस्य, शुचेराषाढस्य, योऽसितः कृष्णपक्ष स्तत्सम्बन्धिन्यामब्धितिथ्यां चतुर्थ्यां सा विधवा, योषा स्त्री, तनूजं पुत्रम्, असूत सुषुवे । तदुक्तम् मधुमधिकृत्य सौरपुराणे नन्दिकेश्वरेण-

भविष्यं कथयिष्यामि तच्छृणुध्वं समाहिताः ।
घोरे कलियुगे प्राप्ते म्लेच्छैर्व्याप्ते भुवस्तले ।।
सर्वाचारपरिभ्रष्टा भविष्यन्ति नराधमाः ।
तदान्ध्रदेशे विकले दाक्षिणात्यो भविष्यति ।।
ब्राह्मणो दुर्भगः कश्चिद्विधवाब्राह्मणीरतः ।
तस्य पापिष्ठविप्रस्य व्यभिचारात् सुतो मधुः ।
भविष्यति शिवद्रोही अवेदाध्ययनोत्सुकः ।। इति ।। ६ ।। मूलम् -

**तत्त्वानभिज्ञत्वमुदीक्ष्य भावि तादात्त्विकाः कालविदोऽर्भकस्य ।**
**तं गोलकं बालकमादरेण नाम्ना व्यधुर्मध्वममुं दुरध्वम् ।। ७ ।।**

(१०४) व्याख्या - तत्त्वेति । तादात्विकाः तत्काले वर्तमानाः, कालविदः कालज्ञाः, अर्भकस्य शिशोः सम्बन्धि, भावि भविष्यत्, अभितो जानातीत्यभिज्ञस्स न भवतीत्यनभिज्ञस्तत्त्वस्य परमार्थस्य अनभिज्ञस्तस्य भावस्तत्त्वं, तत् उदेक्ष्य विलोक्य, ज्ञानदृष्ट्येति शेषः । गोलकं भर्तृमरणानन्तरं जाराज्जातं, अमृते जारजः कुण्डो मृते भर्तरि गोलकः इत्यमरः । दुरध्वं दुर्मार्गं तम् । अमुं बालकम्, आदरेण नाम्ना मध्वं व्यधुः नामाभिन्नमध्वत्वविशिष्टं चक्रुरित्यर्थः । प्रकृतादिभ्य उपसंख्यानमित्यभेदे तृतीया ।। ७ ।। मूलम् -

**जीवात्मभेदामृततारतम्यप्रपञ्चसत्यत्वमुखांस्तु दोषान् ।**
**मन्यन्ति हिंसन्ति हि या मथस्थायस्ता श्रुतीर्वाति हिनस्ति मध्वः ।। ८ ।।**

व्याख्या - पूर्वपद्ये तत्त्वानभिज्ञत्वमुदीक्ष्य नाम चक्रुरित्युक्तम् । सम्प्रति मध्वशब्दार्थं निरूपयंस्तत्त्वानभिज्ञत्वं प्रकाशयति जीवात्मेति । जीवात्मनोः जीव ब्रह्मणोः भेदश्च, अमृते मोक्षे तारतम्यं च, प्रपञ्चसत्यत्वं च, तानि मुख्यान्यादीनि येषां तान् दोषांस्तु याः श्रुतयः, मन्यन्ति हिंसन्ति, ताः श्रुतयः, मथः यः ताः श्रुतीः, वाति हिनस्ति, स मध्वः इत्युच्यते ।। ८ ।। मूलम् -



Scanned with CamScanner

**भौवादिकाद्धिंसनमन्थधातोः क्व्यन्तात्पराद्वेति च गन्धनार्थात् ।**
**आतोऽनुपेत्यादिमहर्षिवाचा कप्रत्यये धस्तु पृषोदरेति ।। ९ ।।**

व्याख्या - सम्प्रति व्याकरणेन मध्वशब्दमुक्तार्थप्रतिपादकतया निष्पादयति भौवादिकादिति। भूरादिर्यस्य गणस्य स भ्वादिः, तत्र भवाद्भौवादिकात् भ्वादिगणपठितादित्यर्थः। क्व्यन्तात् क्विप्रत्ययान्तात् हिंसने हिंसार्थे यो मन्थधातुर्मन्थ हिंसासंक्लेशनयोरिति धातुस्तस्मात्। परात् (१०५) परत्र विद्यमानात् गन्धनार्थात् हिंसार्थकात् व्येति वा इति धातोः सकाशात् वा गतिगन्धनयोः। गन्धनं सूचनं, सूचनं हि प्राणवियोगानुकूलत्वात् हिंसैवेति भट्टोजिदीक्षितगुरुचरणाः । आतोऽनुपेत्यादिर्यस्यास्तया महर्षेः पाणिनेर्वाचा, आतोऽनुपसर्गे क इति सूत्रेणेत्यर्थः । कप्रत्यये सति, पृषोदरेति पृषोदरादीनि यथोपदिष्टमिति सूत्रेण तु धः थकारस्य धकार इत्यर्थः। मन्थेः क्विपि अनिदितामिति न लोपः । मथ् शब्दे उपपदे वातेः कप्रत्यये पृषोदरादित्वात् धत्वे मध्वशब्दो निष्पन्न इति ज्ञेयम् ।। ९ ।। मूलम् -

**एवं विदित्वा पदशक्त्यभिज्ञा निष्पाद्य शास्त्रेण च योगरूढम् ।**
**प्रायुञ्जतामुं किल मध्वशब्दमित्यूचुरस्यार्थविदो महान्तः ।। १० ।।**

व्याख्या - एवमिति । पदानां पदसम्बन्धिन्यो, याः शक्तयः ईश्वर सङ्केतरूपास्तासामभिज्ञा ज्ञातारः, विद्वांस इत्यर्थः । अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरसङ्केतः शक्तिरिति न्यायविदां समयः । एवं पूर्वोक्तार्थं विदित्वा ज्ञात्वा, शास्त्रेण व्याकरणेनेत्यर्थः । निष्पाद्य, तस्यैव शब्दनिष्पादकत्वादिति भावः । योगेनावयवेन अर्थसहकारेण, रूढं वस्तुविशेषे पङ्कजादिवत् सङ्केतितम्, अमुं मध्वशब्दं, प्रायुञ्जत प्रयुक्तवन्तः, किल इत्येवं तस्य मध्वशब्दस्यार्थं विदन्तीति तद्विदः, महान्तः महापुरुषाः, ऊचुरवदन् ।। १० ।। मूलम् -

**कृतोपनीतो विधवातनूजो द्विजैस्तदानीं मिलितैः कृपातः ।**
**अध्येतुमागात्कपटेन मध्वः श्रीशङ्कराचार्यपरम्परागम् ।। ११ ।।**

व्याख्या - कृतेति । तदानीं तत्काले मिलितैः सङ्गतैः द्विजैः विप्रैः कृपातः कृपेति सार्वविभक्तिकस्तसिः । कृतमुपनीतमुपनयनसंस्कारो यस्य स तथोक्तः मध्वः श्रीशङ्कराचार्यपरम्परागं शङ्करभगवत्पादपरम्परागतं पद्मपादाचार्यं प्रतीत्यर्थः। अध्येतुमध्ययनं कर्तुम्, आगात् आगतवान्। तदुक्तं सौरपुराणे -

पद्मपादुकमाचार्य वरं वेदान्तवेदिनम् ।



Scanned with CamScanner

Scanned with CamScanner

अद्वैतागमबोद्धारं प्रणम्य प्रार्थयिष्यति ।।
विप्रोऽहं मधुशर्मास्मि स्वामिन् मां पाठय प्रभो ।
आचार्यः करुणामूर्तिः विनयेन परिप्लुतम् ।।
करिष्यति च शिष्याणामग्रगण्यं प्रेम(?)वत्सलः ।
ततो दिने दिने भक्तिं करिष्यति यथा यथा ।
गुरुर्भवति सन्तुष्टः सर्वा विद्याः प्रयच्छति ।। इति।। ११ ।।

मूलम् -

**स प्रस्थितो दिग्विजयाय शिष्यैः श्रीशङ्कराचार्यविनेयवर्ग्यः ।**
**गोकर्णसीमानमलंवितन्वन् मध्वं नमस्यन्तममुं लुलोके ।। १२ ।।**

व्याख्या - स इति । शिष्यैः सह दिशां विजयाय प्रस्थितः कृतप्रयाणः गोकर्णसीमानं गोकर्णप्रदेशं अलंवितन्वन् अलङ्कुर्वन् श्रीशङ्कराचार्यस्य विनेयानां शिष्याणां वर्गे भवो वर्ग्यः, तच्छिष्यकोटिप्रविष्टः स पद्मपादुकाचार्य इत्यर्थः । नात्र मूलकृता नाम निर्दिष्टमिति भ्रमितव्यम् ।अस्मात् द्वितीयश्लोके पद्मपादार्यवर्य इति निर्देक्ष्यमाणत्वात् । अत एवास्माभिः पूर्वश्लोके प्रकृतश्लोके च सामान्यवाचकपदस्य विशेषवाचकत्वमभिसन्धाय शङ्कराचार्यपरम्पराग इत्यत्र श्रीशङ्कराचार्यविनेयवर्ग्य इत्यत्र च पद्मपादुकाचार्य इति व्याख्यातम् । नमस्यन्तं नमस्कारं कुर्वन्तम् । नमोवरिवश्चित्रङः क्यच्(पा.सू.३.१.१९) इति क्यचि तदन्ताच्छतृप्रत्ययः । लुलोके ददर्श । लोकृ दर्शने कर्तरि लिट् । तथोक्तं गुर्जरदेशप्रसिद्धसम्प्रदायप्रदीपाख्यवैष्णवप्रबन्धे -

गुर्जरदेशे जयसिंहापरनामधेयस्य सिद्धराजस्यानन्तरं कुमारपालाभिधो राजा हेमचन्द्राभिधेन जैनाचार्येण जैनधर्मं ग्राहितः । ततः स्वीकृतजैनधर्माभिमानेन स राजा स्वराष्ट्रवर्तिनीभिः सर्वाभिः प्रजाभिः जैनधर्मं ग्राहयामास । एवं भूयसि काले गते कदाचित् समागतेन गौडदेशीयेन केनचित् वेदप्रबोधनाम्ना भट्टाचार्येण प्रमाणवादयुक्त्यनुभवदृष्टान्तैः सम्यगुपदिष्टः स कुमारपालः पुनः वैदिकं मार्गमनुससार । तस्मिन्नेव काले कश्चित् शङ्कराचार्यशिष्यवंशीयः आचार्यो गोकर्ण क्षेत्रमधिष्ठितो निजान् विद्वत्तमान् शिष्यान् आज्ञापयामास । यथा - भवन्तः श्रीशङ्कराचार्यप्रतिष्ठितं सनातनं धर्मं समर्थयन्तः सर्वासु दिक्षु सञ्चरतेति । एवमाज्ञप्तानां शिष्याणामन्यतमोऽयं मध्वाभिधः पण्डितो निजचेतसि विचारयामास । यथा - नव्यं कमपि सम्प्रदायं प्रवर्तयिष्यामि इति तादृशो मध्वाशयो गुर्वाज्ञाव्यतिक्रमादिभिर्लिङ्गैस्तदानीमेव सर्वैरुन्नीतः।



Scanned with CamScanner

ततोऽसौ देशान्तरं गत्वा वैष्णवसम्प्रदायं रामानुजसम्प्रदायाद्भिन्नं समुद्- भावितवान् । कालेन सम्प्राप्तप्रतिष्ठो भूत्वा दक्षिणदेशे उडुपीप्रश्नाभिधग्रामे स्वधर्मसंस्थापनं चक्रे । विस्तरस्तु तत्रैव द्रष्टव्यः ।

अत्र च गुर्जराधिपतेः कुमारपालस्य राज्ञो राज्यसमये मध्वस्थितिः वर्णिता . विक्रमसमयात्प्रगतेषु नवनवत्यधिकैकादशशतीमितेषु संवत्सरेषु कार्तिकशुक्लदशम्यां कुमारपालस्य राज्याभिषेको बभूवेति प्रबन्धचिन्तामणिग्रन्थे मेरुतुरङ्गाचार्येण सम्प्रदायप्रदीपे तत्कर्त्रा लिखितम्। ततश्च चत्वारिंशत्यधिकदशशतीमितगतशालिवाहनशकसमकालिके पञ्चसप्तत्युत्तरैका दशशतीमितगतविक्रमशके जातस्य मध्वस्य चतुष्षष्ट्युत्तरदशशतीमितगतशालिवाहन शकसमकालिके नवनवत्युत्तरैकादशशतीमितगतविक्रमशके पट्टाभिषिक्तस्य कुमारपालस्य राज्ञो राज्यसमये वर्तनमुचितम् उत्पश्यामः । मध्वोत्पत्तिशकवर्षादारभ्य कुमारपालपट्टाभिषेकवत्सरपर्यन्तं गणानायां मध्वस्य चतुर्विंशतिवयस्कत्वनिश्चयात् ।। १२ ।। मूलम् -

**अद्वैतसिद्धान्तरहस्यमेनमबूबुधत् पद्मपदार्यवर्यः ।**

**मध्वः समुज्झित्य गुरूपदिष्टं स पूर्वपक्षे मतिमाततान ।। १३ ।।**

व्याख्या - अद्वैतेति । पद्मपदार्यवर्यः पद्मपादुकाचार्यश्रेष्ठः, एनं मध्वम्, अद्वैतं जीवब्रह्माभेदरूपं सिद्धान्तरहस्यम्, अबूबुधत् बोधयामास । बुधेर्णिजन्तात् कर्तरि लुङ् । गतिबुद्धीत्यादिना अणिकर्तुः कर्मत्वम् । सः मध्वस्तु, गुरुणा पद्मपादाचार्येण, उपदिष्टम् अद्वैतसिद्धान्तं, समुज्झित्य त्यक्त्वा, पूर्वपक्षे द्वैते, मतिं आततान चक्रे ।। १३ ।। मूलम् -

**मध्वं दुरध्वं प्रथमेषु गण्यं विज्ञाय जीवात्मभिदादिवादैः ।**

**स पद्मपादाख्यमहातपस्वी दुर्बीजमेनं कुलमन्वयुङ्क्त ।। १४ ।।** (१०८)

व्याख्या - मध्वमिति । स प्रसिद्धः, पद्मपादाख्यः पद्मपादुकाख्यः, महातपस्वी दुरध्वेषु दुर्मार्गेषु ये प्रथमा मुख्यास्तेषु गण्यं गणनीयं, मध्वं जीवात्मनोर्भिदा भेदः एव आदिर्येषां तैर्वादैः आदिशब्देन प्रपञ्चसत्यत्वादीनां परिग्रहः । दुर्बीजं विज्ञाय मत्वा, एनं मध्वं, कुलम् अन्वयुक्त पृष्टवान् । तदुक्तं सौरपुराणे -

शिष्यस्य हेतुवादाद्यैः कुपितेन महात्मना ।<br>
पृष्टोऽसौ गुरुणा तथ्यं गोलकोऽयं वदिष्यति ।।<br>
धर्मः साधारणो नाथ कृतोऽयं तेन कुप्यसि ।



Scanned with CamScanner
Scanned with CamScanner

ततो वक्ष्यत्यथाचार्यः कस्ते तातः प्रसूश्च ते ।।

इति ।। १४ ।। मूलम् -

**याभ्यामिदञ्जातमभूत्तवाङ्गं किञ्जातिकौ तौ पितरौ त्वदीयौ ।**

**अन्यूनमद्यानतिरेकमेतद्वृत्तं त्वमावेदय मे दुरात्मन् ।। १५ ।।**

व्याख्या - प्रश्नक्रममेवाह याभ्यामिति । हे दुरात्मन् दुर्बुद्धे, आत्मा यत्नो धृतिबुद्धिः स्वभावो ब्रह्म वर्ष्म च इत्यमरः । इदं परिदृश्यमानं, तव अङ्गं शरीरं, याभ्यां पितृभ्यां, जातमुत्पन्नं अभूत् । त्वदीयौ त्वत्सम्बन्धिनौ, तौ माता च पिता च पितरौ जननीजनकौ, पिता मात्रेत्येकशेषः । का जातिर्ययोस्तौ किंजातिकौ, नद्यृतश्चेति कप् भवतः । एतद्वृत्तं वृत्तान्तं, अन्यूनमिति भावप्रधानो निर्देशः । न विद्यते न्यूनं न्यूनत्वं यस्मिन् कर्मणि तत् तथा। न विद्यते अतिरेकम् आधिक्यं यस्मिन्कर्मणि तत्तथा च । मे मह्यम्, आवेदय बोधय इति ।। १५ ।।

मूलम् -

**यश्चोपयेमे जननीं मदीयां स मज्जनेः पूर्वमयं ममार ।**

**बाहुल्यतो मात्रुपभोक्तृपुंसामुत्पादकं मे न हि वेद्मि योगिन् ।। १६ ।।**

व्याख्या - द्वाभ्यां मध्वोत्तरमाह य इति । यश्च मदीयां जननीम् उपयेमे विवाहितवान्, सः अयं पिता, मम जनेः उत्पत्तेः, पूर्वं प्रथमं, ममार मृतः । तर्हि गर्भस्थे त्वयि पिता मृतः किमिति गुरोराशङ्कां निवारयन्नाह - बाहुल्यत इति । हे योगिन् योगशक्त्या सर्ववेदनशालिन्निति सम्बोधयता न मया मृषा वदितव्यमित्यर्थः स्फुटीक्रियते । मातुरुपभोक्तृणाम् (१०९)अनुभवितॄणां, पुंसां पुरुषाणां, बाहुल्यतः आधिक्याद्धेतोः, मे मम, उत्पादकं जनकं, न हि वेद्मि न जानामि। तदुक्तं सौरपुराणे -

विधवा ब्राह्मणी नाथ ब्राह्मणेन तपस्विना ।
गर्भिणी समभूत्स्वामिन् अयं देहस्ततोऽभवत् ।।
ततो मे ब्राह्मणः स्वामिन् ब्राह्मणी च प्रसूर्मम ।
विज्ञाता जननी सम्यक् न ज्ञाता जनकाभिधा ।।

।। १६ ।। मूलम् -

**माता मदीया विधवा द्विजस्य कस्यापि सङ्गात्समभूत् सगर्भा ।**

**देहोऽयमस्याः समजायतेतिवेद्मीति मध्वो न्यगदीद्यतीशम् ।। १७ ।।**



Scanned with CamScanner

व्याख्या - मातेति। विधवा गतभर्तृका, मदीया माता कस्यापि अज्ञातकुलगोत्रस्येत्यर्थः। द्विजस्य विप्रस्य, सङ्गात् संसर्गात् हेतोः, सगर्भा गर्भिणी, समभूत् । अस्याः मातुः सकाशात्, अयं परिदृश्यमानः मदीयः देहः, समजायत उदभूत् । इत्यहं वेद्मि जानामि । इत्येवं क्रमेण मध्वः यतीशं पद्मपादुकाख्ययतिपुङ्गवं प्रति, न्यगादीत् अवादीत् । गद व्यक्तायां वाचि । कर्तरि लुङ्। अतो हलादेरिति वृद्धिविकल्पः ।। १७ ।। मूलम् -

**अधीतवांस्त्वं कपटेन मत्तो विद्या यतोऽस्मान्न कदापि मूढ ।**

**अद्वैतसिद्धान्तरहस्यमेतद् बुद्धौ स्फुरत्वित्यशपत् गुरुस्तम् ।। १८ ।।**

व्याख्या - अधीतवानिति । हे मूढ, यतः कारणात्त्वं कपटेन मत्तः मत्सकाशात्, विद्याः अधीतवान्, अस्मात् कारणात्, एतत् मया बोधितम्, अद्वैतरहस्यं कर्तृ, कदापि बुद्धौ त्वदीयमत्यां, न स्फुरतु न भासताम्। इत्येवं गुरुः पद्मपादुकयोगी, तं मध्वम्, अशपत् शशाप। तदुक्तं सौरे -

शापं दास्यत्यथाचार्यः सिद्धान्तो मा स्फुरत्वयम् ।
सिद्धान्ते जडता तेऽस्तु परमाद्वैतशासने ।।
ततोऽयमुन्मत्तमार्गो मध्वाख्यः शिवनिन्दकः ।
पूर्वं तु द्रविडाद्देशात्कर्नाटककलिङ्गयोः ।
शनैर्गोदावरीतीरे प्रसृतोऽयं भविष्यतीति ।।

।। १८ ।। (११०) मूलम् -

**समर्थयन्तो गुरुशङ्करार्यप्रतिष्ठितं धर्ममम‍ुं धरायाम् ।**

**निस्तन्द्रिणः सञ्चरतेति शिष्यान् आज्ञापयत्पद्मपदो मुनीन्द्रः ।। १९ ।।**

व्याख्या - एवं विज्ञातदुष्टजनकपटकृत्यः पद्मपादुकतापसो दुष्टजनशिक्षणाय शिष्यानाज्ञापयामासेत्याह - समर्थयन्त इति । हे शिष्याः यूयं निर्गता तन्द्रा आलस्यं निस्तन्द्रा सा एषामस्तीति निस्तन्द्रिणः विगतालस्याः सन्तः, धरायां भूमौ, गुरुणा शङ्करार्येण, प्रतिष्ठितं स्थापितम्, अमुं धर्मम् अद्वैततत्त्वं, समर्थयन्तः साधयन्तः सन्तः, सञ्चरत इति मुनीन्द्रः पद्मपादुकः शिष्यान् आज्ञापयामास । अर्थोऽयं मेरुतुरङ्गाचार्यप्रणीतप्रबन्धचिन्तामणिग्रन्थे सम्प्रदायप्रदीपे च विस्तरेण निरूपितः । अस्माभिरपि एतत्सर्गीयद्वादशश्लोकव्याख्यायां सङ्क्षेपेणोदाहृतश्चेत्यवधेयम् ।। १९ ।। मूलम् -

**इत्यादिशन् पद्मपदो यतीन्द्रः शासत्स्वयं दुष्टजनांश्चिरेण ।**



Scanned with CamScanner

**अकण्टकं क्षोणितलं विधाय विदेहकैवल्यमवाप मुक्तिम् ।। २० ।।**

व्याख्या - इतीति । यतीन्द्रः पद्मपदः पद्मपादुकः इत्येवं प्रकारेण आदिशन् आज्ञापयन् सन्, स्वयं च चिरेण बहुकालं, दुष्टजनान् शासत् निग्रहन् सन्, क्षोणितलम् अकण्टकं निष्कण्टकं, विधाय कृत्वा, विदेहं देहरहितं, कैवल्यमखण्डैकरसत्वरूपां मुक्तिम्, अवाप प्राप। अपगतसकलाभिमानस्य देहसत्तादशायां जीवन्मुक्तत्वम् । देहपातानन्तरं सायुज्यापरपर्यायकैवल्यमिति रहस्यम् । आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये इति श्रुतेः ।। २० ।। मूलम् -

**ततो गतेऽनेहसि भूयसीमां धरां किलाद्वैतिजनैर्विहीनाम् ।**
**विलोक्य मध्वाभिधदानवोऽयं मेनेऽपबाधं स्वमसौ दुरात्मा ।। २१ ।।**

(१११) व्याख्या - तत इति । ततः पद्मपादुकमुक्त्यनन्तरं, भूयसि बहुतिथे, काले गते सति दुरात्मा, गुरुद्रोहित्वादिति भावः । अयं मध्वाभिधो दानवः मूकाभिधदानवावतारवान्, मध्वस्य दानवत्वमिति भावः । धरां भुवम्, अद्वैतिजनैर्विहीनां रहितां सतीं, विलोक्य किल स्वम् आत्मानम्, स्वो ज्ञातावात्मनि इत्यमरः । अपगता बाधा यस्मात्तं निर्व्याधं मेने अमनुत ।।२१।। मूलम् -

**श्रीपद्मपादाख्ययतीश्वरानुशिष्टाश्रवेष्वेकतमः स मध्वः ।**
**नवीनमेकं किल सम्प्रदायमियेष कर्तुं धरणीतलेऽस्मिन् ।। २२ ।।**

व्याख्या - श्रीपद्मपादेति । पद्मपादुकाख्येन यतीश्वरेणानुशिष्टा आज्ञप्ता ये आश्रवाः शिष्यास्तेषु एकतमः स मध्वः अस्मिन् धरणीतले नवीनम् एकं सम्प्रदायं कर्तुम् इयेष इच्छति स । जीवेश्वरभेदजीवाणुत्वप्रपञ्चसत्यत्वपाञ्चरात्रोपजीव्यत्वादयो मध्वसम्प्रदायसिद्धा इत्यवधेयम् ।।२२ ।। मूलम् -

**अस्पृष्टशीर्षं त्वगुरूपदेशमज्ञातयत्याह्निककृत्यजातम् ।**
**अशास्त्रसन्त्यक्तशिखोपवीतं सन्न्यासिवेषं धृतवान् स मध्वः ।। २३ ।।**

व्याख्या - मध्वसन्न्यासक्रममाह अस्पृष्टेति । स मध्वः अस्पृष्टं शीर्षं यस्मिंस्तथोक्तम्। हस्तमस्तकसंयोगशून्यमित्यर्थः । अविद्यमानो गुरूपदेशो यस्मिंस्तथोक्तम् । आचार्योपदेशशून्यम्। अज्ञातं यतीनाम् आह्निकानि अह्ना निर्वर्त्यकृत्यानि प्रणवजपतर्पणादीनि तेषां जातं समूहो यस्मिंस्तथोक्तम् । अशास्त्रेण अविधिना सन्त्यक्ते शिखोपवीते शिखायज्ञोपवीते यस्मिंस्तथोक्तम्।



Scanned with CamScanner

सन्न्यासिवेषं यतिभूमिकां धृतवान् अभूत् ।। २३ ।। मूलम् -

**तत्त्वानभिज्ञः श्रुतिमूर्धवाचांजीवात्मभेदादिकबोधदुष्टाम् ।**

**प्रलोभिकां लोकततेः स मध्वश्चकार वैय्यासिकसूत्रटीकाम् ।। २४ ।।**

(११२)व्याख्या - तत्त्वेति । श्रुतिमूर्धवाचाम् स आत्मा तत्त्वमसि इत्यादिवाक्यानां सम्बन्धिनः तत्त्वस्य वार्थस्य अनभिज्ञः स मध्वः जीवात्मभेदादिकानां बोधेन दुष्टां लोकततेः प्रलोभिकां वञ्चयित्रीम्, उपनिषन्मात्रा वेद्ये वस्तुनि चार्वाकादिवत् प्रत्यक्षप्रमाणोपन्यासादिति भावः । व्यासेन प्रोक्तानां सूत्राणां टीकां विवृतिं, चकार । वैय्यासिकशब्दश्च कास्यादि ठञ् साधुः । जीवात्मभेदतया परिकल्पितश्रुत्यर्थस्तु एतत्सर्गीयप्रथमश्लोकीयव्याख्यायामुपपादितो द्रष्टव्यः ।। २४ ।। मूलम् -

**शिवोत्तमत्वप्रतिपादकानि मेने पुराणानि च तामसानि ।**

**तप्तादिमुद्रादिकधारणानि वैधान्यवादीदयमस्मृतानि ।। २५ ।।**

व्याख्या - शिवेति । शिवस्य यदुत्तमत्वं तस्य प्रतिपादकानि पुराणानि स्कान्दशैवकौर्मादीनि तामसानि सन्ति, मेने विवेद, अकथयदिति यावत् । शिवद्रोहाय प्रवृत्तत्वात्तदुत्कर्षासहिष्णुतया शिवपुराणानां तामसत्वं पुराणविरुद्धम् अचकथदिति भावः। किञ्च, अस्मृतानि स्मृत्यसम्प्रतिपन्नानि, स्मृत्यनुयुक्तानीति यावत् । तप्तारिणा तप्तचक्रेण, या मुद्रा अङ्कनं आदिर्येषां तेषां धारणानि वैधानि विध्युक्तानि सन्ति, अवादीत् जगाद । धारणानीति बहुवचनं शिरोललाटबाह्वाद्यधिकरण भेदाभिप्रायेण । चक्रमिति शङ्खपद्मादीनामुपलक्षकम् । तप्तमुद्राधारणनिषेधकानि करणे प्रत्यवायनिरूपणपराणि च स्मृतिपुराणादिप्रमाणानि प्रथमसर्गगतस्मार्तोऽपीति तृतीयपद्य व्याख्यायामुदाहृतानि द्रष्टव्यानि। शिवपुराणसात्विकत्वप्रतिपादकानि च प्रमाणानि पुराणवाचां शिवर्वणिकानाम् इति चतु स्त्रिंशश्लोकव्याख्यायामुपपादितानि । शिवपुराणतामसत्वनिराकरणं च चतुर्थ सर्गीयैकादशश्लोकव्याख्यायां विधास्यत इति दिक् ।। २५ ।। (११३) मूलम् -

**आत्मैक्यमोक्षैक्यजगन्मृषात्ववादीनि वाक्यानि निरस्य वेदात् ।**

**तदन्यथार्थप्रतिपादकानि वचांसि चक्रे स्वयमेष मध्वः ।। २६ ।।**

व्याख्या - आत्मैक्येति । एषः मध्वः, आत्मनोः जीवात्मपरमात्मनोरैक्यमभेदः, मोक्षे ऐक्यं तारतम्याभावः, जगतो मृषात्वमसत्यत्वम्, तानि वदन्तीनि वादीनि वाक्यानि - तत्त्वमसि, ब्रह्म वेद ब्रह्मैव भवति, इत्यादि वचनानि वेदात् वेदेभ्य इत्यर्थः । जातावेकवचनम् । निरस्य



Scanned with CamScanner

Scanned with CamScanner

वियोज्य, निवार्येति यावत् । तेषाम् अन्यथा अन्यप्रकारा येऽर्थास्तेषां प्रतिपादकानि वचांसि स्वयं चक्रे । एतेन स्वकपोलकल्पितत्वात्तद्वाक्यानामप्रामाण्यमिति भावः । तदुक्तं स्कान्दे कलिधर्मप्रस्तावे -

क्रोधः कर्नाटदेशीयः कामशास्त्रं निरीक्ष्य च ।
स्वयं व्याख्यास्यते पुत्र तद्विरुद्धमते स्थितः ।।
तत्त्ववादसमाख्यां च कृत्वा तस्मिन्निजागमे ।
श्रुतिस्मृतिपुराणानि भञ्जयिष्यति दुर्मतिः ।।
स्वयं करिष्यते धीरः पुराणानि श्रुतीः स्मृतीः ।
अष्टादशपुराणेषु स्मृतिष्वष्टादशस्वपि ।।
अद्वैतनिरतं सर्वं वाक्यमुत्पाटयिष्यति ।
कारयिष्यति पुण्ड्राणि वेणुपत्राकृतीनि च ।।
स्वकल्पितपुराणानि व्यापयिष्यति भूतले ।

मध्वश्च क्रोधांश इतीयता प्रबन्धेनावोचाम ।। २६ ।। मूलम् -

**तं दानवं केचन मद्यगेहक्षेत्रोद्भवं ह्युक्षमविडात्मलीलम् ।**
**विधाय मध्वं गुरुमादरेण वेदान् जहुस्तां किल लोकमान्यान् ।। २७ ।।**

व्याख्या - तमिति । केचन दुर्भागाः दानवम् मूकाभिधदानवावतारत्वादिति भावः। उद्भवत्यस्मादुद्भवमुत्पत्तिकारणं मद्यगेहस्य तन्नामकपुंसः क्षेत्रं पत्नी उद्भवं यस्य तम् । मद्यगेहोद्भवमित्यनुक्त्वा क्षेत्रपर्यन्तधावनं पूर्वोक्तगोलकत्वाविष्करणार्थम् । क्षेत्रं पत्नीशरीरयोः इत्यमरः । गञ्जालयजातमित्यर्थान्तरम् । रुक्षविषि, रुक्ष विष्ठायाम् । उडुप्यामिति यावत्। आत्ता प्राप्ता लीला येन तम्, उडुपीनिवासिनमित्यर्थः । रुक्षोडुशब्दावेकपर्यायौ आन्ध्र भाषायां विष्ठायाः पीतिसञ्ज्ञा । ततश्चोडुपिरुक्षविट्शब्दौ समानार्थौ सञ्जाताविति ज्ञेयम्। भल्लकविष्ठासमुपात्तलील इत्यर्थान्तरम् ।

कालटी कालडी कृत्वा पत्तलं मणिमञ्जरौ ।
योऽ बुक्कत्पदयुग्मेन तुष्येत्स न कथं नरः ।।

तं मध्वम्, आदरेण गुरुं विधाय कृत्वा, लोकमान्यान् तान् अपौरुषेयत्वेन प्रसिद्धान् वेदान्, जहुः त्यक्तवन्तः । किलेति प्रसिद्धौ । तदुक्तं सौरपुराणे -



Scanned with CamScanner

ततः परं भविष्यन्ति तस्य शिष्या अनेकशः ।
मायावादमसच्छास्त्रं वदिष्यन्ति नराधमाः ।।
तेषां दर्शनमात्रेण सचैलं स्नानमाचरेत् ।
भद्रात्वं च यथा विष्टे राहोः स्वर्भानुता यथा ।।
हरित्वं च यथा भेके तथा ते तत्त्ववादिनः ।
घृतकोशातकीतुल्यं तत्त्ववादमुपाश्रिताः ।।
योगनिन्दापरा नित्यमग्निहोत्रस्य निन्दकाः ।
वेदान्तसममित्याहुः प्राकृतं च नराधमाः ।।
केवलं वेषमात्रेण नरा नरकगामिनः ।
सम्भाषणे कृते तेषां पतेच्च ब्रह्मवर्चसः ।।
वरं बौद्धस्तथा जैनः कापालिकमतोऽपि वा ।
व्यक्तं वदन्ति वेदानामप्रामाण्यं तु तैः किमु ।।
वेदं प्रमाणवत् कृत्वाऽभिमानी न च वैदिकः ।
ईश्वरं वचनाद्ब्रूयुर्विभिन्नं जीवतः खलाः ।।
संन्यासवेषमात्रेण कुर्वाणा जीविका निजाः ।
राजसेवां प्रकुर्वाणाः प्रच्छन्ना लौकिका अपि ।।
अगम्यागमने सक्ता अभक्ष्यस्य च भक्षणे ।
अपेयनिरताः केचिन्नानाभोगसमाकुलाः ।।
यानारूढाः सदा राजसंस्तवेषु च तत्पराः ।
अद्वैतनिन्दानिरताः प्रच्छन्नग्रन्थगौरवाः ।।
अन्यदर्शनसिद्धान्तं नैव जानन्ति तत्त्वतः ।
तत्र दोषानेव सदा पठिष्यन्ति कलौ युगे ।।
अन्यदैवतनामानि यदि हेयानि तत्कथम् ।
वेदं पठन्ति पापिष्ठाः कथं तर्कं वदन्ति हा ।।
मीमांसाशास्त्रसद्ग्रन्थानालोक्य च पुनः पुनः ।
पूर्वपक्षं च सर्वेषां (११५)ग्रहिष्यन्ति समत्सराः ।।



Scanned with CamScanner

स्वकीयं न वदिष्यन्ति यतो नास्ति प्रभाकरम् ।
हंसान् परमहंसांश्च निन्दिष्यन्ति च जारजाः ।।
जातमात्रं नरं कञ्चित् मुण्डयित्वा मठाधिपम् ।
काषायवस्त्रमात्रेण करिष्यन्ति नराधमाः ।।
माठापत्यं च सेवा च धनसङ्ग्रह एव च ।
दासीगमनमीर्ष्या च पञ्चधा तत्त्ववादिता ।।
संसारस्तत्त्वमित्येव परं ते तत्त्ववादिनः ।
भविष्यन्ति यदा विप्राः पापानां प्रभवः कलौ ।।
तथा तथा भविष्यन्ति ह्युदीच्यां दम्भवैष्णवाः ।
शिवसामान्यवक्तारं शिवसामान्यदर्शिनम् ।।
दृष्ट्वा स्नायात्सचैलः सन् शिवसामान्यसङ्गिनम् ।
मधुदर्शितमार्गेण पापिष्ठाः वैष्णवाः कलौ ।।
भविष्यन्ति ततो म्लेच्छाः शूद्रा यूथबहिष्कृताः ।
एतादृशो द्वैतिनोऽन्ये भविष्यन्ति महीतले ।।
शिवद्रोहात्पतिष्यन्ति नरकेषु न संशयः । इति ।

स्कान्देऽपि -

तत्त्ववादमते स्थित्वा केचिद्ब्राह्मणबान्धवाः ।
दाहयिष्यन्ति गात्राणि तप्तलोहैर्द्विजाधमाः ।।
दग्धदेहाश्च ते सर्वे त्यक्तवैदिकसत्क्रियाः ।
ब्राह्मणानेव निन्दन्ति श्राद्धयज्ञान् महारुषः ।।
दुरात्मनो दुराचाराः कृमिकूपे भयङ्करे ।
पतिष्यन्ति न सन्देहो भोक्ष्यन्ते चापि यातनाः ।।

इति ।। २७ ।। मूलम् -

**दौरात्म्यमित्थं प्रकटय्य लोके मध्वः शिवद्रोहवशाद्दुरात्मा ।**
**गुदव्रणार्तश्चिखिदे यदेतद्वक्तुं वयं सम्प्रति न प्रवीणाः ।। २८ ।।**

व्याख्या - दौरात्म्यमिति । दुरात्मा दुर्बुद्धिः मध्वः लोके इत्थं पूर्वोक्तरीत्या दौरात्म्यम्



Scanned with CamScanner

दुर्मार्गत्वमित्यर्थः । प्रकटय्य प्रकाश्य शिवद्रोहवशात् गुदव्रणेनार्तः पीडितः सन् चिखिदे खेदविशिष्टोऽभवदिति यत् सम्प्रति एतत् तदनुभूतखेदनं वक्तुं कथयितुं वयं न प्रवीणाः न समर्थाः स्मः । तत्खेदस्य अपारत्वादिति भावः । स्कान्दे -

रोगार्तास्ते भविष्यन्ति ये द्रुह्यन्ति पिनाकिने । इति ।

पाद्मे - निरयं ते गमिष्यन्ति ये द्रुह्यन्ति महेश्वरम् । इति ।

।। २८ ।।(११६)मूलम् -

**साष्टाङ्कनेत्राब्धिकलौ गतेऽस्मिन् साङ्केन्दुभूमीशशिके शकेऽपि ।**

**मध्वोऽजहात्पिङ्गलमाघशुक्ले तिथौ नवम्यां व्रणपीडितोऽङ्गम् ।। २९ ।।**

व्याख्या - साष्टेति । अस्मिन् भासमाने अष्ट प्रसिद्धाः अङ्काः नव, नेत्रे द्वे, अब्धयश्चत्वारः, तैः सह वर्तत इति साष्टाङ्कनेत्राब्धिर्यः कलिः कलिसमयस्तस्मिन् गते सति, अष्टनवत्युत्तरद्विशत्युपस्कृतसहस्रचतुष्टयोपेतकलिहायने गते सतीत्यर्थः । किञ्च, अङ्काः नव, इन्दुरेकः, भूम्येका, शशी एकः, तैः सह वर्तत इति साकेन्दुभूमीशशिकस्तस्मिन् शके शालिवाहनशके शालिवाहनशकेऽपिगते सति एकोनविंशत्युत्तरैकादशशतीमितशालिवाहन समये गते सतीत्यर्थः । पिङ्गलस्य पिङ्गलवत्सरस्य यो माघस्तस्य शुक्ले शुक्लपक्षे नवम्यां तिथौ मध्वः व्रणेन गुदव्रणेनेत्यर्थः । पीडितः सन् अङ्कं देहम् अजहात् त्यक्तवान् । जह त्यागे कर्तरि लङ् ।। २९ ।। मूलम् -

**मध्वे रुजा कालवशं गतेऽस्मिन् शिष्यैस्तदीयैर्धृततप्तमुद्रैः ।**

**विलोपितेऽद्वैतनये धरायां श्रीशङ्करार्योऽवतितीर्षुरासीत् ।। ३० ।।**

व्याख्या - मध्व इति । अस्मिन् मध्वे रुजा रोगेण कालवशं मृत्युवशं गते सति धृततप्तमुद्रैः तदीयैर्मध्वसम्बन्धिभिः शिष्यैः अद्वैतनये अद्वैतशास्त्रे विलोपिते विध्वंसिते सतीत्यर्थः। श्रीशङ्करार्यः धरायां भूमौ अवतितीर्षुः अवतरितुमिच्छुः अद्वैतोद्धारायेति भावः । आसीत् ।।३०।।

इति श्रीमद्रघुनाथसूरिकृतमाणिक्यमञ्जरीव्याख्यायां
मध्वदौरात्म्यप्रकाशो नाम तृतीयः सर्गः ।।(११७)





Scanned with CamScanner



# अथ चतुर्थः सर्गः

मूलम्

**स्वाद्वैतसिद्धान्तमथोद्दिधीर्षुःश्रीशङ्करार्यः किल मायणार्यात् ।**
**तद्धर्मपत्न्यामजनिष्ट साध्व्यां सुकीर्तिनाम्न्यां शुभलक्षणायाम् ।। १ ।।**

व्याख्या - चतुर्थसर्गेऽस्मिन् शङ्करावतारान्तरविद्यारण्यगुरुसार्वभौमकथां विवक्षुरादौ तदुत्पत्तिमाह - स्वेति । अथ अद्वैतशैथिल्यानन्तरं, श्री शङ्करार्यः स्वाद्वैतसिद्धान्तम् उद्धर्तुमिच्छुः उद्दिधीर्षुः सन्, मायणार्यात् शुभानि लक्षणानि यस्यां तस्यां, साध्व्यां पतिव्रतायां, सुकीर्तिनाम्न्यां तस्य मायणार्यस्य धर्मपत्न्यामजनिष्ट उदभूत् । किलेति प्रसिद्धौ । तथोक्तं पराशरमाधवीये - श्रीमती जननी यस्य सुकीर्तिर्मायणः पिता । इति ।। १ ।। मूलम् -

**कलौ गतेऽङ्काक्षिशिखिश्रुतीते शके गते खेषु महीमहीते ।**
**श्रीमाधवार्योऽजनि सर्वधारिचैत्राद्यपक्षे दशमीदिनेऽयम् ।। २ ।।**

व्याख्या - माधवाचार्योत्पत्तिकालमाह कलाविति । अङ्काः नव, अक्षिणी द्वे, शिखिनस्त्रयः, श्रुतयः वेदाः चत्वारः, तानि इते प्राप्ते, कलौ गते सति, एकोनत्रिंशदुत्तरशतत्रयोपेतचतुःसहस्री रूपकलिशके गते सतीत्यर्थः । किञ्च, खं शून्यम्, इषवः पञ्च, मही एका, ता इते प्राप्ते शके शालिवाहनशकसंवत्सरे गते सति, पञ्चाशदुत्तरैकादशशतीमितशालिवाहनशकवर्षे गते सतीत्यर्थः। सर्वधारिणस्तन्नामकाब्दस्य यश्चैत्रः तस्य आद्ये पक्षे शुक्लपक्षे दशमीदिने अयं श्रीमाधवार्यः अजनि आविरभूत् । तथोक्तं मेरुतुरङ्गाचार्येण -

एकोनत्रिंशदूर्ध्वत्रिशतीसंयुक्चतुःसहस्रेषु ।
कलिवर्षेषु गतेषु च माधवजननं मधौ सिते दशमीति ।। २ ।। मूलम् -

**चूडादिकर्माणि विधाय तातस्तस्योपनीतिं व्यतनोत् सुतस्य ।**
**अधीतवानेष बटुः प्रगल्भः पितुः सकाशात्सकलाश्च विद्याः ।। ३ ।।**

(११८)व्याख्या - चूडेति । तातो मायाणाचार्यः, तस्य सुतस्य माधवाचार्यस्य, चूडादि



Scanned with CamScanner

कर्माणि विधाय कृत्वा, उपनीतिं उपनयनं, व्यधात् अकरोत् । प्रगल्भः प्रौढः, एषः बटुः माधवाचार्यः, पितुः सकाशात् सकलाः कलाभिः सहिताः विद्याश्चतुर्दश विद्याः, अधीतवान् । चतुर्दशविद्यास्तु -

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ।। इति ।। ३ ।। मूलम् -

**अधीतविद्यं जनकः परीक्ष्य विवाहकर्मास्य विधातुमिच्छन् ।**
**आनीय वंशे विमले प्रजातां कन्यां विवाहं निरवर्तयत् सः ।। ४ ।।**

व्याख्या - अधीतेति । जनकः पिता स मायणाचार्यः, अधीतविद्यं पुत्रं, परीक्ष्य शास्त्रार्थपरीक्षां, कृत्वा अस्य माधवाचार्यस्य, विवाहकर्म विधातुं कर्तुम्, इच्छन् सन्, विमले वंशे प्रजातां कन्याम् आनीय आदाय, विवाहं निरवर्तयत् अकरोत् ।। ४ ।। मूलम् -

**पुरा मया कामकलानुयोगे कायान्तराद्याश्रयणादखेदि ।**
**तादृक् श्रमो मास्त्वधुनेति वध्वा जग्राह पाणिं किल माधवार्यः ।। ५ ।।**

व्याख्या - पुरेति । पुरा पूर्वं, शङ्कराचार्यरूपेणाविर्भावसमये इति यावत् । कामकलानामनुयोगे प्रश्ने, मण्डनमिश्रभार्याभूतशारदाकर्तृककामकलाप्रश्नकाले इत्यर्थः । कायान्तरादेः परकायादेराश्रयणात्, मया अखेदि खिन्नं, खिद क्षैण्ये भावे लुङ् । अधुना अस्मिन् माधवावतारे, तादृक् पूर्वोक्तलक्षण लक्षितः, श्रमः मास्तु मा भवतु । इति मत्वा किल, ज्ञात्वैवेत्यर्थः । माधवार्यः वध्वाः पाणिं जग्राह गृहीतवान् ।। ५ ।। मूलम् -

**स माधवस्तां समुपेत्य भार्यामुत्पाद्य पुत्रान् विरचय्य यज्ञान् ।**
**शास्त्रेषु सर्वेषु कृतीर्विधाय ताः पाठयामास विनेयवर्गम् ।। ६ ।।**

(११९) व्याख्या - स इति । स माधवः तां भार्यां समुपेत्य प्राप्य, पुत्रानुत्पाद्य यज्ञान् विरचय्य कृत्वा, सर्वेषु शास्त्रेषु कृतीः धातुवृत्त्यादिप्रबन्धान्, विधाय ताः कृतीः विनेयानां शिष्याणां, वर्गं पाठयामास अध्यापयामास । गतिबुद्धीत्यादिना शिष्याणां कर्मत्वे कर्मणि द्वितीयेति द्वितीया ।। ६ ।। मूलम् -

**स चैकदा दिग्विजयाय गच्छन् अक्षोभ्यभिक्षुं किल मध्वशिष्यम् ।**
**विलोक्य तं जेतुमना नितान्तं वादे ततानादरमार्यवर्यः ।। ७ ।।**

व्याख्या - स इति। आर्यवर्यः सः माधवाचार्यः एकदा दिग्विजयाय गच्छन् अक्षोभ्यमिति



Scanned with CamScanner

Scanned with CamScanner

भिक्षुं सन्न्यासिनं, विलोक्य तम् अक्षोभ्यं, जेतुं मनो यस्य तथोक्तः सन्, तुं काममनसोरपीति तुमुनो मकारस्य लोपः । वादे नितान्तम् अत्यन्तम् आदरं विश्वासं ततान चक्रे ।। ७ ।।

मूलम् -

**अक्षोभ्यनामा खलदानवोऽयं शिवोत्तमत्त्वासहनोऽखिलानाम् ।**

**स्कान्दादिकानां निगमानुगानामित्थं बभाषे खलु तामसत्वम् ।। ८ ।।**

व्याख्या - अक्षोभ्येति । अक्षोभ्यनामा अयं खलदानवः दुष्टराक्षसः, अक्षोभ्यस्य दानवत्वं तु न केवलं जन्मनैव कर्मणापीति वेद्यम् । तथोक्तं सौरपुराणे नन्दिकेश्वरेण -

मधुदर्शितमार्गेषु ये च सन्ति नराधमाः ।

दानवांस्तान् विजानीयात् सङ्कीर्णानपि जातितः ।। इति ।

शिवपुराणेऽपि -

तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः ।

तानि तानि प्रणीतानि विद्वांस्तत्र न मुह्यति ।।

अयं परस्त्वयं नेति संरम्भाभिनिवेशिनः ।

यातुधाना भवन्त्येव पिशाचाश्च न संशयः ।। इति ।

सहत इति सहनः, न सहनः असहनः, शिवस्य यदुत्तमत्वं तस्यासहनः शिवोत्तमत्वासहनः सन्, निगमानुगानाम् वेदानुसारिणां, स्कान्दादिकानां शिवोत्तमत्वप्रतिपादकपुराणानां, तामसत्वं तामसब्रह्मप्रणीतत्वादिति शेषः । इत्थं एवं जगाद उवाच ।। ८ ।। (१२०) मूलम् -

**कल्पेष्वयं केषुचिदब्जयोनिस्तमःप्रधानः किल तामसानि ।**

**चक्रे पुराणानि शिवोत्तमत्वबोधीनि च स्कान्दमुखानि देवः ।। ९ ।।**

व्याख्या - अक्षोभ्यस्तामसत्वप्रकारमुपपादयति कल्पेष्विति । अब्जयोनिः देवः ब्रह्मदेवः, केषुचित् कल्पेषु तत्पुरुषादिकल्पेष्वित्यर्थः । तमः प्रधानं यस्य स तथोक्तः सन् शिवस्य यदुत्तमत्वं तस्य बोधीनि बोधकानि, स्कान्दमुखानि स्कान्दप्रभृतीनि, तामसानि पुराणानि चक्रे कृतवान्, अतः शैवान्यप्रमाणानीति भावः । तथाह मात्स्यम् -

सङ्कीर्णाः सात्विकाश्चैव राजसाश्चैव तामसाः ।

यस्मिन् कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा ।।

तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते ।। इति ।



Scanned with CamScanner

तत्स्वरूपेण कल्पोचितगुणशालिना ब्रह्मणेत्यर्थः । पद्मपुराणेऽपि -

वैष्णवं नारदीयं च तथा भागवतं शुभम् ।
गारुडं च तथा पाद्मं वाराहं शुभदर्शने ।।
षडेतानि पुराणानि सात्विकानि निबोध मे ।
ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च ।।
भविष्यं वामनं ब्राह्मं राजसानि निबोध मे ।
मात्स्यं कौर्म्यं तथा लैंग्यं शैवं स्कान्दं तथैव च ।
आग्नेयं च षडेतानि तामसानि निबोध मे ।। इति ।

अत्रोपष्टम्भकत्वेन यदुदाहृतम् अक्षोभ्येन तत् तुच्छम् । आदिमवचनगततत्स्वरूपेणेत्यस्यार्थापरिज्ञानात् द्वितीयवचनस्य पुराणेष्वनुपलम्भेन कल्पितत्वात् । एषा च प्रक्रिया स्कान्दादिकानामित्यग्रिमपद्यव्याख्यायां निरूपयिष्यते अस्माभिः ।। ९ ।। मूलम् -

**बुधेन्द्रसंलालितपादपद्मः श्रीमाधवाचार्यवरोऽखिलज्ञः ।**
**पुराणनिन्दां रचिताममृष्यन् अक्षोभ्यमिक्षुं निजगाद चैवम् ।। १० ।।**

व्याख्या - बुधेन्द्रेति । अखिलज्ञः सर्वज्ञः, अत एव बुधेन्द्रैः संलालितपादपद्मः श्रीमाधवाचार्यवरः रचितां पुराणनिन्दां, शैवानि तामसानीत्यक्ष्योभ्यविरचितपुराणनिन्दामित्यर्थः। अमृष्यन् असहमानः (१२१) सन्, एवं वक्ष्यमाणप्रकारेण, अक्षोभ्यभिक्षुं निजगाद उवाच ।। १० ।। मूलम् -

**स्कान्दादिकानां किल तामसत्वं यत्प्रोक्तमक्षोभ्ययते त्वयासीत् ।**
**स्थाने न तत् स्वोक्तिविरोधसत्त्वात् मध्वेन तेषां ग्रहणात्प्रबन्धे ।। ११ ।।**

व्याख्या - शिवपुराणानां तामसत्वं निराकरोति स्कान्दादिकानामिति । हे अक्षोभ्ययते, स्कान्दादिकानां यत् किल तामसत्वं त्वया प्रोक्तमासीत् तत्तामसत्वकथनं न स्थाने न युक्तम् । कुतः, स्वोक्तिविरोधसत्त्वात् । स्वोक्तेर्भवद्वचनस्य यो विरोधः त्वदुक्तार्थविरुद्धार्थकथनरूपः पुराणादिविरोधस्तस्य सत्त्वात् । किञ्च, त्वन्मतकूटस्थेन मध्वेन तेषां स्कान्दादिपुराणानां तत्प्रबन्धे, अथातो ब्रह्मजिज्ञासेत्यादिब्रह्मसूत्रटीकादौ ग्रहणादुपष्टम्भकत्वेन स्वीकाराच्च । सम्प्रति तामसत्वमुपपाद्य खण्डयामः । तथाहि - यत्तु भवता सङ्कीर्णाः सात्विकाश्चैव इति मात्स्यमुपष्टभ्य ब्रह्मणि तामसत्वमुपकल्पितं तत्पुराणार्थानभिज्ञतामूलकम्, स्वोक्तिविरोधसत्त्वात्। यथा -



Scanned with CamScanner

सङ्कीर्णाः सात्विकाश्चैव राजसाश्चैव तामसाः ।
यस्मिन् कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा ।
तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते ।।

इति मात्स्यवचनस्य चायमर्थः - सङ्कीर्णादयो ये कल्पाः सन्ति तेषु यस्मिन् कल्पे यत्पुराणं ब्रह्मणा प्रोक्तं तस्य तस्य कल्पस्य माहात्म्यं तत्स्वरूपेण पुराणस्वरूपेण वर्ण्यते इति । ततश्च तत्स्वरूपेणेत्यस्य तामसादिरूपेण ब्रह्मणा इत्यर्थो न युज्यते । कल्पपुराणपरयच्छब्दद्वयप्रतिनिर्देशात्मकतच्छब्दद्वयेन कल्पपुराणपरामर्शस्य न्याय्यत्वात् ।

अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते ।
राजसेषु तु माहात्म्यमधिकं ब्रह्मणो विदुः ।।
सङ्कीर्णेषु सरस्वत्याः पितॄणां च निगद्यते ।
सात्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः ।
तेष्वेव योगसंसिद्धा गमिष्यन्ति पराङ्गतिम् ।।

इति तदुत्तरग्रन्थविरोधाच्च । तथाहि - यदि कल्पानुगुण्येन ब्रह्मा तामसत्वादि गुणविशिष्टः तामसादीनि पुराणानि प्रणिनायेति कल्पयिष्यते, तर्हि (१२२) सङ्कीर्णेषु सङ्कीर्णः सन् सङ्कीर्णानि प्रणिनायेत्यापद्येत । तच्च भवदुदाहृतपुराणतामसत्वादिविभाजक - वैष्णवं नारदीयं च - इत्यादिवचनेष्वेव न लभामहे किमुतान्यत्र ।

तस्मात् कल्पानुगुण्येन ब्रह्मा तामसत्वविशिष्टः तामसानि प्रणिनाय इत्युक्त्वा तामसा नरकाय वै इति यत्त्वया परिकल्पितं तदतीव तुच्छम् ।

तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम्

इत्यन्तिमवचनेन सर्वेषु कल्पेषु योगसंसिद्धा एव परां गतिं गमिष्यन्तीति बोधनात् । आस्तां तावदिदं कल्पेषु तामसत्वादिकम् । न तेन प्रणेतृप्रबन्धप्रमेयानां तामसत्वादिकं सिद्ध्यति। येन ब्रह्माणं तामसत्वं संस्पृशेत् । यदि च कल्पानुगुण्येन तेषां तामसत्वादिकल्पने भवदभिनिवेशो बलीयान् तर्हि, कलिकालदौष्ट्यस्य पुराणानुभवसिद्धत्वेन तत्र सम्भविष्यत्कल्केरपि दुष्टत्वापत्तिर्दुर्वारा स्यात् । न चेष्टापत्तिः, दुष्टनिग्रहशिष्टपरिपालनाय धरण्यां कृतावतारस्य कल्किरूपभगवन्महाविष्णोर्दुष्टत्वकल्पनाया अन्याय्यत्वात् । यदप्युक्तं भवता-

वैष्णवं नारदीयं च तथा भागवतं शुभम् ।



Scanned with CamScanner

Scanned with CamScanner

गारुडं च तथा पाद्मं वाराहं शुभदर्शने ।
षडेतानि पुराणानि सात्विकानि निबोध मे ।।
ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च ।
भविष्यं वामनं ब्राह्मं राजसानि निबोध मे ।।
मात्स्यं कौर्म्यं तथा लैङ्गं शैवं स्कान्दं तथैव च ।
आग्नेयं च षडेतानि तामसानि निबोध मे ।।

इति वचनमुपन्यस्य शिवपुराणानां तामसत्वं, तदसङ्गतम् । स्वोक्तेः स्ववचनस्य विरोधः । पुराणेषु तद्विरुद्धार्थोपलम्भनरूपस्य सत्त्वात् । तथा हि प्रभासखण्डे -

चतुर्भिर्भगवान्विष्णुर्द्वाभ्यां ब्रह्मा तथा रविः ।
अष्टादशपुराणेषु शेषेषु भगवान् शिवः ।। इति ।

स्कान्दे शङ्करसंहितायाः शिवरहस्यखण्डे उद्भवकाण्डे द्वितीयाध्याये अष्टादशपुराण परिगणनानन्तरमुक्तम् -

तत्र शैवानि शैवं च भविष्यं च द्विजोत्तमाः ।(१२३)
मार्कण्डेयं तथा लैङ्गं वाराहं स्कान्दमेव च ।।
मात्स्यमन्यत्तथा कौर्म्यं वामनं च मुनीश्वराः ।
ब्रह्माण्डं च दशैतानि त्रीणि लक्षाणि संख्यया ।।
ग्रन्थानां महिमा सर्वैः शिवस्यैव प्रकाश्यते ।
विष्णोर्हि वैष्णवं तद्वत्तथा भागवतं द्विजाः ।।
नारदीयपुराणं च गारुडं वैष्णवं विदुः ।
ब्राह्मपाद्मे ब्रह्मणो द्वे अग्नेराग्नेयमेककम् ।।
सावित्रं ब्रह्मवैवर्तमेवमष्टादश स्मृताः ।
दश शैवपुराणानि सात्विकानि विदुर्बुधाः ।।
वैष्णवानि च चत्वारि तामसानि मुनीश्वराः ।
ब्राह्मं पुराणद्वितयं राजसं परिकल्पितम् ।।
गुणत्रयसमायुक्तमाग्नेयं सौरमेव च ।। इति ।

एतेन भवदुदाहृतवचनं निर्मूलमिति मन्यामहे । पुराणेषु त्वदुदाहृतवचनानामनुपलम्भात् ।



Scanned with CamScanner

अत्रेदमवधेयम् - यद्यपि परैः शैववैष्णवपुराणानां वैलक्षण्यं प्रतिपादितं तद्वैपरीत्येन विष्णुपुराणानामप्रामाण्यं प्रतिपादनीयम् । तथापि तत्त्वावबोधनप्रवृत्तैरस्माभिः न तथा कर्तुमुचितम्। नहि परेण भ्रान्तमिति स्वेनापि भ्रमितव्यम् । अतः सर्वपुराणानां प्रामाण्यव्यवस्थापकसिद्धान्तः प्रस्तूयते । तथाहि - यदत्र स्कान्दवचनेन शैवानां सात्विकत्वं, वैष्णवानां च पुराणानां तामसत्वं प्रतीयते तत्रैवं समाहितिः, सात्विकानि राजसानि तामसानीत्यस्य सात्विकराजसतामस कल्पप्रोक्तानीत्यर्थः । तेन च पुराणानामप्रामाण्यशङ्कानवकाशः सिद्धः । अन्यथा सङ्कीर्णानामपि परिगणनापत्त्या सात्विकादित्रितयपरिगणनमसङ्गतं स्यादित्यवोचाम । इत्थं च कल्पगततामसत्वं प्रणेतृप्रबन्धानां न लगतीति सिद्धम् । न चैवं केषुचित्पुराणेषु वैष्णवानि सात्विकानीति केषुचित् शैवानि पुराणानि सात्विकानीत्युच्यते कथमत्र व्यवस्था युज्यते इति भ्रमितव्यम् । कल्पभेदेन तदुपपत्तेः । मूर्खे छन्दानुरोधेन इति न्यायमनुसृत्य, यत्तु भवतेत्यादिसमाधानग्रन्थो लिखितः सर्वमिदमास्तां तावत् । यत्तूक्तं ब्रह्मा पुराणानां कर्तेति तन्न । स्वोक्तेर्विरोधस्य सत्त्वात् । तथाहि, न चतुर्मुखः पुराणानां प्रणेता, किन्तु शिवप्रोक्तानां प्रवक्ता, येन प्रवक्तुः (१२४) तमोभिभवः पुराणानामप्रामाण्यम् आवहेत् । एतच्च भवतापि प्रमाणत्वेनाभ्युपगते महाभारते शान्तिपर्वणि राजधर्मे - शिव एव सर्वपुराणानामादिकर्तेत्युक्तम्। तथाहि -

भूयः स भगवान् ध्यात्वा चिरं शूलवरायुधः ।
असृजत् सर्वशास्त्राणि महादेवो महेश्वरः ।।
अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ।। इत्युपक्रम्य
तस्मै वेदान् पुराणं च दत्तवानग्रजन्मने ।

इत्युपसंहृतम् । अतो ब्रह्मा न पुराणप्रणेतेति सिद्धम् । किञ्च ब्रह्मणा कल्पभेदेन पुराणानि प्रणीतानीति न प्रतीमः । मात्स्ये सर्गाद्यकाले अविदितब्राह्मपाद्मादिविभागस्य शतकोटिप्रविस्तरस्य पुराणस्कन्धस्य ब्रह्ममुखान्निर्गतस्य ततो व्यासमहर्षिणा अष्टादशधा चतुर्लक्षसङ्क्षेपः कृत इत्यर्थस्य चोपलब्धेः । तथा हि मात्स्यम् -

पुराणं सर्वशास्त्राणि शिवोक्तं ब्रह्मणा स्मृतम् ।
अनन्तरं तु वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ।।
पुराणमेकमेवासीत् तदा कल्पान्तरे नृप ।



Scanned with CamScanner

Scanned with CamScanner

त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ।।
निर्दग्धेषु च लोकेषु वारिपूरेण वै मया ।
अङ्गानि चतुरो वेदान् पुराणं न्यायविस्तरम् ।।
मीमांसां धर्मशास्त्रं च परिगृह्य मया कृतम् ।
मत्स्यरूपेण तु पुनः कल्पादावुदकार्णवे ।।
अशेषमेतत् कथितमुदकान्तर्गतेन च ।
श्रुत्वा जगाद च मुनीन् प्रति मत्तश्चतुर्मुखः ।।
प्रवृत्तिर्धर्मशास्त्राणां पुराणस्याभवत्ततः ।
कालेनाग्रहणं दृष्ट्वा पुराणस्य ततो नृप ।।
व्यासरूपमहं कृत्वा संगृह्णामि युगे युगे ।
चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा ।।
तथाष्टादशधा कृत्वा भूलोकेऽस्मिन् प्रकाशते ।
अद्यापि देवलोके तच्छतकोटिप्रविस्तरम् ।।
तदर्थोऽत्र चतुर्लक्षे सङ्क्षेपेण निवेशितः ।

इत्यलं पल्लवितेन ।। ११ ।। मूलम् -

**अक्षोभ्यभिक्षुश्चरणं पवित्रमित्यादि तप्तारिधृतौ प्रमाणम् ।**
**कृत्वा पवित्रं चरणं निघण्टुं मत्त्वारिमुद्राविधृतिं जगाद ।। १२ ।।**

(१२५) व्याख्या - अक्षोभ्यस्तप्तमुद्राधारणं साधयति अक्षोभ्येति । अक्षोभ्यभिक्षुः चरणं पवित्रमिति आदिर्यस्य श्रुतिवचनस्य तच्चरणं पवित्रम् इत्यादि -

चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि ।
तेन पवित्रेण शुद्धेन पूतातिपाप्मानमरातिं तरेम ।।

इति श्रुतिमित्यर्थः । प्रमाणं कृत्वा

पवित्रं चरणं चक्रं लोकद्वारं सुदर्शनम्

इति वचनमित्यर्थः । निघण्टुं मत्वा तप्तारिमुद्रायाः तप्तचक्रमुद्राया, विधृतिं धारणं, जगाद । अराणि पत्राणि यस्य सन्तीत्यरि चक्रं, श्रुत्यर्थस्तु स्पष्ट एव ।। १२ ।। मूलम् -

**सा सूत्रकारैर्विनियोजितापाघेष्टौ निघण्टूरचितस्त्वदीयैः ।**



Scanned with CamScanner

**देयं न तत्रैतदहो प्रमाणमितीरयंस्तापनमच्छिनत् सः ।। १३ ।।**

व्याख्या - माधवाचार्यस्तप्तमुद्राधारणं खण्डयति रोति । अहो अहो अक्षोभ्ययते सूत्रकारैः सा चरणं पवित्रमिति श्रुतिः अपाघेष्टौ अपाघनामकविकृतौ, अपाघा अनुवित्तयो नामेति श्रुतेः विनियोजिता विनियुक्ता । निघण्टुः पवित्रं चरणं चक्रं लोकद्वारं सुदर्शनमिति कोशस्तु, त्वदीयै रचितः कृतः, निघण्टुषु क्वाप्यनुपलम्भादिति भावः । एतत् द्वयं तप्तमुद्राधारणविषये न प्रमाणं, प्रमाणं भवितुं नार्हतीत्यर्थः । इति ईरयन् वदन् सन्, सः माधवाचार्यः, तापनं तप्तमुद्रया शरीरदहनम्, अच्छिनत् अखण्डयत् । श्रुत्यर्थस्तु चरणं सदाचारः । तत्कीदृशम् ? पवित्रं पावनं, विततं सर्वलोकव्याप्तं, पुराणं बहुकालगतत्वेन पुराणत्वादशेषशिष्टजनानुष्ठितं च, येन सदाचारेण पूतः पवित्रः सन्, दुष्कृतानि दुष्कर्माणि, तरति जन इति शेषः । पवेः पापात् त्रायत इति पवित्रं, तेन पावकेन, अत एव शुद्धेन तेन सदाचरणेन, पूताः सन्तः अरातिं शत्रुभूतं पाप्मानं, पापानीत्यर्थः। अतितरेम अतिक्रमेम इति ।। १३ ।। मूलम् -

**प्रश्लिष्य चैकं नञमेष माध्वस्तुल्यार्थकं तत्त्वमसीति वाक्ये ।**
**अभेदवाचां श्रुतिमूर्धगानां जगाद सादृश्यपरत्वमासाम् ।। १४ ।।**

(१२६) व्याख्या -अक्षोभ्यो जीवब्रह्मभेदं साधयितुमुपक्रमते प्रश्लिष्येति। माध्वो मध्वशिष्यः, एषः अक्षोभ्यः, तत्त्वमसीति वाक्ये स आत्मा तत्त्वमसि इति श्रुतौ, तुल्यार्थकं सादृश्यार्थकं, एकं नञ् नञ्शब्दं, प्रश्लिष्य । अधिकतयोच्चारणं प्रश्लेष इति वैय्याकरणसमयः। श्रुतिमूर्धगानां उपनिषद्गतानाम्, आसामिति बहुवचनादाद्यर्थलाभः तत्त्वमस्यादीनामित्यर्थः। अभेदवाचां तत्त्वमसि, ब्रह्म वेद ब्रह्मैव भवति इत्यादिवचनानां सादृश्यपरत्वं जगाद ऊचे । यत्किञ्चिद्धर्मवत्त्वेन त्वं तद्वासि न वस्तुतस्तत् त्वमिति तदर्थः । यो ब्रह्म वेद स एव ब्रह्म भवतीति, ब्रह्म वेद ब्रह्मैव भवतीत्यस्यार्थः । एवमेवैतादृशवाक्यानामर्थोऽवधेय इति । केचित्तु माध्वाः तत्त्वमसीत्यत्र सादृश्ये लक्षणां परिकल्प्यार्थं वर्णयन्ति । तदप्यस्मदुक्तार्थपरमेवेति न विवदामहे । तथाप्यक्षरतः सादृश्यार्थे सिद्धे लक्षाणार्थकमनर्थकमिति परिपाटीयमाश्रिता अस्माभिः ।। १४ ।। मूलम् -

**किं चेतनत्वेन परात्मतौल्यं किं वास्य सार्वज्ञ्यमुखैर्गुणौघैः ।**
**नाद्यः प्रसिद्धानुपदेश्यतायाः नापि द्वितीयः स्वमतार्थहानेः ।। १५ ।।**

व्याख्या - माधवाचार्यो जीवात्मभेदं विकल्प्य खण्डयति - किमिति । अस्य जीवस्य, परात्मतौल्यं परमात्मसादृश्यं, चेतनत्वेन किमिति प्रश्ने, वा अथवा सार्वज्ञ्यं सर्वज्ञत्वं मुखं येषां



Scanned with CamScanner
Scanned with CamScanner

तैः सार्वज्ञ्यमुखैः सर्वज्ञत्वस्वतन्त्रत्वादिभिः गुणौघैः गुणसङ्घैः किम्? उभयथापि न स्वाभिमतार्थः सिध्यतीति प्रदर्शयन् आद्यं चेतनत्वेन सादृश्यपक्षं खण्डयति नाद्य इति । आद्यश्चेतनत्वेन सादृश्यपक्षः न सम्भवति, कुतः प्रसिद्धानुपदेशतायाः हेतोः प्रसिद्धस्य चेतनत्वेन प्रसिद्धिं गतस्य जीवस्य श्वेतकेतोर्वेदेन त्वं तदिव चेतनोऽसि इत्युपदेष्टुम् अयोग्यत्वाद्धेतोः अज्ञातार्थबोधकत्वेनोपदेशकतां प्रतिपन्नस्य वेदराशेः सिद्धार्थानुवादकत्वेन शास्त्रत्वभङ्गापत्तेरिति भावः । द्वितीयपक्षं खण्डयति - नापि द्वितीय इति । (१२७) द्वितीयः सर्वज्ञत्वादिना सादृश्यपक्षोऽपि न सम्भवति। कुतः, स्वमतार्थहानेर्हेतोः स्वस्य भवतोऽभिमतो योऽर्थः जीवोऽल्पज्ञः अस्वतन्त्र इत्यादिस्तस्य हानेः क्षतेर्हेतोः । उपाधिविनाशानन्तरं जीवस्य ब्रह्मभावं वदताम् अस्माकं मते भवतोऽनुप्रवेशापत्तेरिति भावः । ननु - अभेदवादिनां भेदश्रुतिविरोधो दुर्वार इति चेत्, मैवं मंस्थाः । व्यवहारदशायां भेदस्य, परमार्थतस्तु अभेदस्य चाभ्युपगमात् । अन्यथा कर्मोपासनाकाण्डयोर्वैय्यर्थ्यमापद्येत । न हि सर्वेऽप्युत्पत्तिकालमारभ्य वामदेवादिवदात्मज्ञा भवन्ति । येन ते त्वद्वितीयात्मनि निष्ठाशालिनः स्युः । अतः कर्मोपासनादिभिः शुद्धान्तःकरणानां देहपातानन्तरं ब्रह्मभाव इति नास्माकं भेदश्रुतिविरोधः, किं तु तवैवाभेदश्रुतिविरोधः कण्ठे गडुरिति जानीहि । अद्वैतमतरीत्या तत्त्वमसि इत्यादिश्रुत्यर्थस्तु प्रथमसर्गीयजीवात्मनोरिति द्वितीयश्लोकव्याख्यायामुपपादितो द्रष्टव्यः इति दिक् ।। १५ ।।

मूलम् -

**नञो निषेधार्थकतां विदित्वा सार्वज्ञ्यहानेरसि तन्न च त्वम् ।**
**इत्यर्थमक्षोभ्ययतेरभेत्सीत् नेहेति वाचा गुरुमाधवार्यः ।। १६ ।।**

व्याख्या - पक्षान्तरमवलम्ब्याक्षोभ्यपरिकल्पितमर्थं खण्डयति माधवाचार्यः नञ इति। अतत्वमसीति च्छित्वेत्यध्याहारः । नञः नशब्दस्य निषेधार्थकतां विदित्वा सार्वज्ञ्य हानेर्हेतोः त्वं तद्ब्रह्म न चासि न भवसि इत्येवं प्रकल्पितमित्यर्थः । अक्षोभ्ययतेः अर्थं श्रुत्यर्थं नेहेति वाचा नेह नानास्ति किञ्चन इति श्रुत्या अभेत्सीत् बिभेद । इह किञ्चन किञ्चिदपि नाना भेदो नास्तीति नेह नानेति श्रुतेरर्थः । ननु केनचिन्माध्यस्थ्यं तन्वता

विदुषा असिना तत्त्वमसिना परजीवप्रभेदिना ।
विद्यारण्यमहारण्यमक्षोभ्यमुनिरच्छिनत् ।।

इति पद्यं पठता अक्षोभ्यस्य जयः प्राकाशीति चेत्, न । तस्य मध्यस्थोक्तित्वकल्पनानुपपत्तेः । पञ्चाशदुत्तरैकादशशतीमितगत शालिवाहसमये प्रवृत्तसर्वधारिवत्सरे (१२८) सम्भूय जन्मतः



Scanned with CamScanner

षोडशे क्रोध्यब्दे अक्षोभ्यं जितवतो माधवाचार्यस्य तदानीं विद्यारण्याभिधायाः अभावात् । सप्तपञ्चाशदुत्तरद्वादशशतीमित(१२५७) गतशालिवाहसमये प्रवृत्तयुवाब्दे क्रमसंन्यासं स्वीकृतवतो माधवाचार्यस्य भारतीतीर्थगुर्वनुग्रहतो विद्यारण्याभिधालाभस्य प्रमाणप्रबन्धेषु अभिधानात् । इत्थं च माधवकर्तृकाक्षोभ्यजयकाल-विद्यारण्याभिधानलाभकालयोरेकनवतिवत्सरव्यवधानस्य सत्त्वात् असिना तत्त्वमसिना इत्यस्य मध्यस्थोक्तित्वं कथं सङ्घटतामित्यायुष्मता भवतैव विचारणीयम्। भाविनीं संज्ञामाश्रित्य मध्यस्थेनोक्तमित्यपि वक्तुं न शक्यते । अनुभूतविज्ञातपूर्ववस्तुविस्मृतिजनके कलिसमये एकनवति(९१)वत्सरे भविष्यन्त्या विद्यारण्याभिधायाः पूर्वं ज्ञातुमशक्यत्वात् । तस्मात् असिना तत्त्वमसिना इति वचनं केनचिदाधुनिकेन कल्पितमिति स्पष्टमवभासते । प्राचीनविद्यारण्याक्षोभ्यचरित्रप्रतिपादकग्रन्थेषु असिना इति श्लोकस्य उभयोर्वादविषयस्याप्यदर्शनात्। अस्तु वा मध्यस्थोक्तिः, तथापि नेदं पद्यं विद्यारण्यपराभवमभिधत्ते, किन्तु तत्कर्तृकाक्षोभ्यकर्मकजयम्। येन भवदीयाभिमतं सिध्येत् । तथाहि -

असिना तत्त्वमसिनाऽपरजीवप्रभेदिना ।
विद्यारण्यमहारण्यमक्षोभ्यं मुनिरच्छिनत् ।। इति ।

अत्र अक्षोभ्यम्, उ, निरच्छिनत् इति पदच्छेदः। तदर्थस्तु अपरजीवप्रभेदिना परश्च जीवश्च परजीवौ, परजीवयोः प्रभेदः परजीवप्रभेदः अविद्यमानश्चासौ परजीवप्रभेदश्च अपरजीवप्रभेदः, सोऽस्मिन्नस्तीति अपरजीवप्रभेदी, तेन अपरजीवप्रभेदिना। वाच्यत्वेन जीवब्रह्मभेदाप्रतिपादकेन लक्षणावृत्त्या जीवब्रह्मैक्यप्रतिपादकेनेति यावत् । न चात्र न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत् तदर्थप्रतिपत्तिकर इति वार्तिककारानुशासनात् मत्वर्थीयप्रत्ययो (१२९) न युक्त इति वाच्यम् । प्रत्ययस्थात् कादिति सूत्रे भाष्ये असुब्वत इति भाष्यकारप्रयोगो क्वचिल्लाघवानादरस्य सूचनात्। अत एव कृष्णसर्पवद् वल्मीकमित्यादिप्रयोगाः सङ्गच्छन्ते । तत्त्वमसिना असिना करणेन हे विद्यारण्य भवान् महारण्यमिव दुरासदत्वात् महारण्यत्वोक्तिः सिंहो माणवक इतिवत् महारण्यं, उः अवधारणे। अक्षोभ्यमेव निरच्छिनत् नितरां चिच्छेद । अक्षोभ्ये दुरासदत्वोक्तिस्तज्जेतरि विद्यारण्ये संक्रामतीति ज्ञेयम् ।

शत्रुं सर्वगुणोपेतमुक्त्वा तज्जयकीर्तनात् ।
तज्जेतरि गुणाः सर्वे संक्रामन्ति जितेन हीति शुक्रोक्तेः ।। १६ ।। मूलम् -

**इत्थं तदा तत्त्वमसीति वज्रेणात्मप्रभेदासहनेन धीमान् ।**



Scanned with CamScanner

Scanned with CamScanner

**अक्षोभ्यभूमीधरभेदपक्षं स माधवेन्द्रोऽच्छिनदाशु दुष्टम् ।। १७ ।।**

व्याख्या - अद्वैतसिद्धान्तमुपसंहरति इत्थमिति । धीमान् पण्डितः, माधव एवेन्द्रः, तदा वादसमये, इत्थं पूर्वोक्तरीत्या, आत्मनोः जीवात्मपरमात्मनोर्यो भेदः, तस्य असहनेन असोढ्रा, तत्त्वमसीति वज्रेण करणेन, दुष्टम् अक्षोभ्य एव भूमीधरः पर्वतस्तस्य भेदस्तस्य पक्षस्तं आशु शीघ्रेण, अच्छिनत् चिच्छेद ।। १७ ।। मूलम् -

**श्रीमाधवः क्रोधिनि षोडशेऽब्दे त्वक्षोभ्यभिक्ष्वादिमदानवांस्तान् ।**
**विजित्य मध्वीयमतं कुपूयं नामावशेषं व्यतनोन्महात्मा ।। १८ ।।**

व्याख्या - श्रीमाधव इति । महात्मा श्रीमाधवः, क्रोधिनि क्रोधिनामके, षोडशे जन्मतः षोडशसंख्याकेऽब्दे, तान् दुष्टत्वेन प्रसिद्धान्, अक्षोभ्यभिक्ष्वादिमदानवान् विजित्य, कुपूयं कुत्सितं, मध्वीयमतं मध्वसम्बन्धिद्वैतमतं, नामावशेषो यस्य तत्तथाभूतं सत्, अतनोत् अकरोत् ।। १८ ।। (१३०) मूलम् -

**हृद्रोगतो वत्सरमेष जीवन् अक्षोभ्यकः सप्तषडिन्दुचन्द्रे ।**
**शके च विश्वावसुमार्गशीर्षशुक्लेषुतिथ्यां तनुमत्यजत्स्वाम् ।। १९ ।।**

व्याख्या - हृद्रोगेति । एषः कुत्सितोऽक्षोभ्योऽक्षोभ्यकः प्रामाणिकाद्वैत परिपन्थिद्वैतमतावलम्बित्वादिति भावः । कुत्सिते इति कुत्सायां कप्रत्ययः । हृद्रोगतः पराजयसम्भूतमनोव्यथया, वत्सरं वर्षपर्यन्तं, कालाध्वनोरत्यन्तसंयोगे इति द्वितीया । जीवन् प्राणान् धारयन् सन्, सप्त षट् च प्रसिद्धाः, इन्दुरेकः, चन्द्र एकः, ततश्च अङ्कानां वामतो गतिः इति नियमात्, सप्तषष्ट्युत्तरैकादशशतीमिते शके शालिवाहशके गते सति विश्वावसुमार्गशीर्षशुक्लस्य इषुतिथ्यां पञ्चमीतिथौ, स्वां स्वीयां, तनुं देहम्, अत्यजत् तत्याज। एतच्च माध्वसम्प्रदाये स्पष्टम् ।। १९ ।। मूलम् -

**जित्वा दिशो माधवदेशिकेन्द्रः श्रौतान्प्रतिष्ठाप्य समस्तधर्मान् ।**
**श्रीमद्विरूपाक्षदिदृक्षयागात् पम्पातटं श्रीरघुरामजुष्टम् ।। २० ।।**

व्याख्या - जित्वेति । माधव इति देशिकेन्द्रः आचार्यप्रवरः, दिशः जित्वा, श्रौतान् वेदोक्तान्, समस्तधर्मान् प्रतिष्ठाप्य, श्रीमतो विरूपाक्षस्य, दिदृक्षया द्रष्टुमिच्छया, श्रीमता रघुवंशोत्पन्नेन रामेण, जुष्टं सेवितं, जुषी प्रीतिसेवनयोः कर्मणि क्तः । पम्पायास्तटम्, अगात् अगच्छत् ।। २० ।। मूलम् -



Scanned with CamScanner

**स तुङ्गभद्राभिधरम्यनद्यां स्नात्वा विधायाह्निकमादरेण ।**
**श्रीमद्विरूपाक्षमुखांस्तु देवान्संसेव्य सन्तुष्टमना बभूव ।। २१ ।।**

व्याख्या - स इति । सः माधवाचार्यः, तुङ्गभद्रेत्यभिधा नाम यस्यास्तस्यां रम्यायां नद्यां, स्नात्वा स्नानं कृत्वा, अह्ना निर्वत्यमाह्निकं अहः कर्म, विधाय कृत्वा, आदरेण श्रीमद्विरूपाक्षमुखान् देवान् संसेव्य सेवित्वा, सन्तुष्टमनाः सन्तुष्टान्तरङ्गः, बभूव ।। २१ ।।

(१३१) मूलम् -

**प्रजाहितं कर्म विधातुमिच्छुर्लब्ध्वालयं श्रीभुवनेश्वरीयम् ।**
**जजाप चैकादशकोटिसंख्यं विद्यां श्रियः षोडशवर्णरूपाम् ।। २२ ।।**

व्याख्या - प्रजेति । सः माधवाचार्यः, प्रजानां हितं हितकरं कर्म नगरनिर्माणादिकार्यं, विधातुं कर्तुम्, इच्छुरिच्छन् सन्, श्रीभुवनेश्वरीयम् आलयं प्रासादं, लब्ध्वा षोडशवर्णरूपं यस्याः ताम्, श्रियः विद्यां एकादशानां कोटीनां समाहार एकादशकोटिसंख्या यस्मिन् कर्मणि तत्तथा जजाप । तथाह भगवान् नृसिंहः -

पूर्वं विप्रवरः कश्चिन्माधवार्य इति श्रुतः ।
गृहस्थभावमालम्ब्य तस्थौ शीलसमन्वितः ।।
कदाचित् शङ्कराचार्यपारम्पर्यमुपागतम् ।
सन्न्यासिनमुपाश्रित्य विनयावनतोऽधिकम् ।।
वृत्तान्तमखिलं तस्मै यतये स्वं व्यजिज्ञपत् ।
स यतिर्विप्रवर्याय श्रीविद्यां षोडशाक्षरीम् ।।
इह सौख्यप्रदामन्ते मुक्तिदां समुपादिशत् ।
तस्मै श्रीचक्रराजस्य पूजाविधिमपि क्रमात् ।।
तस्याभ्यनुज्ञामासाद्य पम्पातटमुपेत्य सः ।
आचचार पुरश्चर्यां स चैकादशकोटिशः ।।

इति ।। २२ ।। मूलम् -

**पुरश्चरन्तं भुवनेश्वरी सा विलोकमाना करुणार्द्रदृष्ट्या ।**
**पश्याद्य पार्श्वे परिदह्यमानान् एकादशाद्रीन् इति वाचमूचे ।। २३ ।।**

व्याख्या - पुर इति । सा भुवनेश्वरी, पुरश्चरन्तं माधवाचार्यं, करुणार्द्रया दृष्ट्या



Scanned with CamScanner

विलोकमाना पश्यन्ती सती, माधव तव पार्श्वे दह्यमानान्, मयेति शेषः। एकादश एकादशसंख्यानद्रीन् गिरीन्, पश्य इति वाचम् ऊचे। तथोक्तम् -

अथापि देवीमर्चाभिरप्रसन्नां विलोक्य सः ।
गम्भीरवचनैः पद्यैस्तां स्तोतुमुपचक्रमे ।।
तदा तु वृद्धमातङ्गीरूपमास्थाय सावदत् ।
विप्र भो कीदृशं कर्म यतसे कर्तुमीरय ।।
इति पृष्टे तया विप्रे निजोदन्तं निवेदिनी ।
हसन्ती प्राह सा विप्रं त्वमालोकय पार्श्वतः ।।
एवं वाचं ब्रुवाणायामुदैक्षत सपार्श्वतः ।
एकादशगिरींस्तत्र दह्यमानानलोकयत् ।। इति ।। २३ ।। (१३२)

मूलम् -

**किमेतदार्येऽद्भुतमित्यमुष्मिन् जल्पत्यसावित्थमुवाच देवी ।**
**परोपकाराय कृतं तपो यत् ततोऽभ्यगां द्रष्टुमहं भवन्तम् ।। २४ ।।**

व्याख्या - किमिति । हे आर्ये, एतत् अद्भुतमाश्चर्यं, किमिति अमुष्मिन् माधवाचार्ये, जल्पति सति । असौ देवी, इत्थं वक्ष्यमाणप्रकारां, वाचमूचे । इतः सार्धश्लोकद्वयेन तदुक्तिमेवाह - परोपकारायेति । यद्यस्मात् कारणात्, परोपकाराय तपः कृतं, त्वयेति शेषः । तत्तस्मात्कारणात्, भवन्तं द्रष्टुमहं, अभ्यगाम् अभ्यागच्छम् । अत्रोदाहर्तव्यप्रमाणवचनम् अद्यैव कुर्याम् इत्यग्रिमपद्ये उदाहरिष्यते ।। २४ ।। मूलम् -

**नृणां पुरैकादशजन्मजातान्दहाम्यघाद्रीन् फलदित्सयाद्य ।**
**त्वद्भाविजन्मन्यखिलेष्टसिद्धिं नूनं विधास्यामि न संशयोऽत्र ।। २५ ।।**

व्याख्या - नृणामिति । दातुमिच्छा दित्सा, फलस्य दित्सा फलदित्सा, तया हेतुना नृणां सम्बन्धिनः पुरा पूर्वं, एकादशसु जन्मसु जातान् अघाद्रीन् पापपर्वतान्, अद्य अहनि भस्मीकरोमि। दारिद्रयस्य पापमूलत्वादिति भावः । तथाह भृगुः - पापमूला दरिद्रता तव भाविनि भविष्यति, जन्मनि अखिलेष्टानां सिद्धिं विधास्यामि नूनं ध्रुवम् । अत्रास्मिन् विषये संशयो नास्ति ।।२५।।
मूलम् -

**अद्यैव कुर्यां धनमत्तचित्तः संविस्मरेर्ब्रह्म चिरन्तनं त्वम्।**



Scanned with CamScanner

Scanned with CamScanner

**इत्यद्य दातुं फलमस्मदीयं नोत्कण्ठते मानसमद्य याहि ।। २६ ।।**

व्याख्या - अद्यैवेति। अद्यैव इदानीमेव कुर्याम्, इष्टसिद्धिमिति शेषः । त्वं धनेन मत्तं चित्तं यस्य सः तथोक्तः सन्, चिरन्तनं पुराणं, ब्रह्म संविस्मरेः, इति मत्वेत्यर्थः । अद्य फलं दातुम् अस्मदीयं मानसं नोत्कण्ठते नोत्सहते । अतः अद्य याहि गच्छ । नोत्कण्ठते याहि गृहं स्वकीयम् इति पाठान्तरम् । तत्र मानसमित्यध्याहर्तव्यम् । तदुक्तं स्वामिना नृसिंहेन -

किमेतदिति तां प्राह प्रोवाचैषा च तां प्रति ।
एनांसि यानि वृत्तानि पुरैकादश जन्मसु ।।(१३३)
तानि पर्वतरूपाणि दह्यन्तेऽद्य नृणां मया ।
भाविजन्मन्यभीष्टं ते सिद्धेत्यभिधाय सा ।।

इति ।। २६ ।। मूलम् -

**उक्त्वेत्थमन्तर्द्धिमियाय देवी जन्मान्तरे वा धनमत्तता स्यात् ।**
**इत्याकलय्याश्रममेष गन्तुं तुर्यं धियं माधवदेशिकोऽधात् ।। २७ ।।**

व्याख्या - उक्त्वेति । देवी इत्थं पूर्वोक्तरीत्या, उक्त्वा अन्तर्द्धिमन्तर्धानम्, इयाय प्राप। माधवदेशिकस्तु जन्मान्तरे वा भाविजन्मनीत्यर्थः । धनमत्तता स्यात् इति आकलय्य ज्ञात्वा, तुर्यं चतुर्थमाश्रमं सन्न्यासं, गन्तुं प्राप्तुं, धियं मतिम्, अधात् धारयति स्म । सन्न्यासाश्रमस्य मोक्षसाधनत्वेन भविष्यज्जन्माभावादिति भावः । इयायेत्यत्र इण् गतौ कर्तरि लिट् । अत्राह नृसिंहभगवान् -

अन्तर्हिताभवत्तस्मिन् समये तदनन्तरम् ।
अन्यजन्मकृतं भूयात् सन्न्यासे मम साम्प्रतम् ।
इत्थमालोच्य विभवे स्वयं सन्न्यासितामगात् ।।

इति ।। २७ ।। मूलम् -

**कलौ गतेऽङ्काक्षियुगाब्धियुक्ते शके च खेष्वक्षिधरासमेते ।**
**सन्न्यस्तवांस्तद्विभवे स्वयं स प्रैषं समुच्चार्य हि माधवार्यः ।। २८ ।।**

व्याख्या - कलाविति । अङ्का नव, अक्षिणी द्वे, युगाश्चत्वारः, अब्धयः चत्वारस्तैर्युक्ते एकोनत्रिंशदुत्तरचतुःशत्युपस्कृतचतुःसहस्रीपरिमिते इत्यर्थः । कलौ कलिसमये गते सति किञ्च, खं शून्यम्, इषवः पञ्च, अक्षिणी द्वे, धरा एका, ताभिः समेते पञ्चाशदुत्तरद्वादशशतीपरिमिते



Scanned with CamScanner

इत्यर्थः । शालिवाहनशकेऽपि गते सति विभवे विभववत्सरे, सः माधवार्यः तस्मात्कारणात् यतः सन्न्यासतो जन्मान्तराभावः तस्मादित्यर्थः । स्वयं प्रैषं समुच्चार्य सन्न्यस्तवान् । तदुक्तं पूर्वम् -

इत्यमालोच्य विभवे स्वयं सन्न्यासितामगात् ।

इति ।। २८ ।। मूलम् -

**समस्तदुर्दानपरिग्रहादिदोषेण पूर्वं रघुरामकाले ।**

**यो ब्रह्मरक्षस्त्वमगाद् द्विजाग्र्यस्तं शृङ्गिभट्टं मनसा स दध्यौ ।। २९ ।।**

व्याख्या - समस्तेति । पूर्वं त्रेतायामित्यर्थः । रघुरामस्य काले राज्यसमये, समस्तानां दुर्दानानां परिग्रहादिना(१३४) यो दोषस्तेन हेतुना आदिना प्रायश्चित्ताकरणादीनां परिग्रहः। द्विजाग्र्यो ब्रह्मणोत्तमो यः शृङ्गिभट्टः ब्रह्मरक्षस्त्वं ब्रह्मराक्षसत्वं अगात् प्राप । अकृतप्रायश्चित्तत्वादिति भावः । तं शृङ्गिभट्टं सः माधवाचार्यः मनसा दध्यौ ध्यातवान् । ध्यै चिन्तायाम् कर्तरि लिट् । अत्रोदाहर्तव्यानि प्रमाणानीतः षष्ठे ततः कदाचित् इति पद्ये निरूपयिष्यामः । इदमुत्तरपद्येष्वपि ज्ञेयम् । शृङ्गिभट्टस्याख्यायिका तु निरूप्यते । पुरा किल त्रेतायां शृङ्गिभट्टाभिधो विद्वान् द्रव्याशापरवशतया दुष्प्रतिग्रहतत्परः, अतिलुब्धतया अननुष्ठितशास्त्रीयप्रायश्चित्तः अलब्धावकाशतया अनध्यापितशास्त्रनिचयोऽवर्तत । समीक्ष्य एतस्य दुर्नयं सुमन्तमन्त्रिप्रमुखा रहसि दिने च कस्मिंश्चिद्दातारं श्रीरामं यवनिकान्तः प्रतिग्रहीतारमेनं च शृङ्गिभट्टं बहिरुपवेश्य तिलपर्वतादीन् न्यदापयन् । सरभसमेनमुदचारयंश्च शृङ्गिभट्टं ततोऽधिकतरधनलाभ सन्तुष्टान्तरङ्गतया विस्मृतसर्वप्रायश्चित्तप्रतिनिधिभूत श्रीरामध्यानतन्नामसङ्कीर्तनेन सत्त्वरगमनतत्परमनस्कतयानाकलितश्रीराममुखसन्दर्शनेन दुर्दैवाधिष्ठितशिरस्कतयाननुष्ठित प्रायश्चित्तेन च शृङ्गिभट्टेन ब्रह्मरक्षस्त्वमलम्भि । तद्ब्रह्मरक्षस्त्वनिवृत्तिश्चतुर्वारं व्याससन्दर्शनाद्भविष्यतीति पौराणिकी गाथानुसन्धेयेति । तत्र त्रिवारं व्याससन्दर्शनमासीदिति मन्महे । तथाहि, प्रथमतो व्यासं दिदृक्षुर्विद्यारण्यः शृङ्गिणा सह बदरीमयासीदित्याद्यम्,

शृङ्गिणा सहितस्तत्र व्यासानुग्रहवैभवात् ।

त्रिकालज्ञानसम्पत्तिं प्राप विद्याश्च सर्वशः ।।

इति नृसिंहोक्तेः । सुवर्णवृष्ट्यनन्तरं पुरं निर्मातुकामो विद्यारण्यः स्वयं निष्णातसकलशास्त्रोऽपि लोकमर्यादामनुपालयन् सुमुहूर्तपरिज्ञानाय व्यासं प्रष्टुकामः शृङ्गिणा सह बदरीमुपागादिति



Scanned with CamScanner

द्वितीयम्,

श्रृङ्गिणा सहितो व्यासं दृष्ट्वा विज्ञाप्य तत्कथाम् ।
व्यासप्रसादाद्विज्ञाय सुमुहूर्तं विनिर्गतः ।।

इत्युक्तेः । वेदभाष्यसंशोधनाय व्यासं प्रति गमनसमये विद्यारण्यः श्रृङ्गिणा सहितो वाराणसीम् अगच्छदिति तृतीयं (१३५) सन्दर्शनम् ।

आकामावा इति प्रश्नस्योक्त्वा चोत्तरमग्रतः ।
वशीकृतो यस्तेनैव सह काशीं समाययौ ।।

इत्युक्तेः । चतुर्थं तु विद्यारण्यमुनेर्द्वितीयावतारे सेत्स्यतीत्यैतिह्यं स्पष्टम् इत्यलं पल्लवितेन ।।२९ ।। मूलम् -

**ध्यानक्षणायातमहात्मश्रृङ्ग्याकामादिसुप्रश्नगिरं निशम्य ।**
**आषाढराकादिषु नापि सस्नौ भवानितीवोत्तरयाम्बभूव ।। ३० ।।**

व्याख्या - ध्यानेति । ध्यानक्षणे आयातस्यागतस्य, महात्मनः श्रृङ्गिणस्सम्बन्धिनीम् आकामादयो यस्यास्तां शोभनां प्रश्नगिरम् आकामावै को न स्नातेति प्रश्नवचनमित्यर्थः । निशम्याकर्ण्य आषाढस्य या राका पूर्णिमा सा आदिर्यासां तास्वाषाढराकादिषु आषाढकार्तिकमाघवैशाखपूर्णिमास्त्वित्यर्थः । पूर्णे राका निशाकरे इत्यमरः । भवान् नापि सस्नौ उषःकाले न स्नातवान् तत्र स्नानस्यातिशयितपुण्यफलत्वोक्तेरिति भावः । इतीव एवं। इव शब्दो वाक्यालङ्कारे । उत्तरयाम्बभूव । प्रत्युत्तरं दत्तवान् । उत्तरेति प्रातिपदिकात्प्रातिपदिकाद्धात्वर्थे बहुलमिण्ठवच्चेति धातुगुणसूत्रेण दानार्थे णिचि तदन्तात्कर्तरि लिट् ।। ।। ३० ।। मूलम् -

**त्वदुत्तरैर्हृष्टतमोऽस्मि सद्यो वरं वृणीष्वेति गिरं निशम्य ।**
**व्यासस्थितिं दर्शय मे महात्मन् अद्येत्यवादीत्किलमाधवार्यः ।। ३१ ।।**

व्याख्या - त्वदिति । माधवार्य, सद्य इदानीं तव उत्तरैः हृष्टतमः अस्मि, वरमिष्टार्थं वृणीष्व अर्थय, इत्येवंरूपां गिरं श्रृङ्गिभट्टवचनं, निशम्याकर्ण्य हे महात्मन्, अद्य मे मम, व्यासस्थितिं दर्शय इति अवादीत्किल ।। ३१ ।। मूलम् -

**श्रीश्रृङ्गिभट्टोक्तदिशा प्रयाय लब्ध्वा बदर्याश्रममार्यसेव्यम् ।**
**व्यासप्रसादादधिगत्य सम्यक्कालत्रयज्ञानमयं प्रतस्थे ।। ३२ ।।**



Scanned with CamScanner

व्याख्या - श्रीति । अयं माधवाचार्यः, श्रीमता शृङ्गिभट्टेनोक्ता या दिक् तया प्रयाय प्रस्थाय, आर्यसेव्यं बदर्याश्रमं लब्ध्वा व्यासस्य प्रसादादनुग्रहात् कालत्रयस्य भूतभविष्यद्वर्तमानरूपकालत्रितयस्य ज्ञानं सम्यक्साधु अधिगत्य प्राप्य, प्रतस्थे प्रययौ । ष्ठा गतिनिवृत्तौ समवप्रविभ्यः स्थ इत्यात्मनेपदम् ।। ३२ ।। मूलम् -

**पम्पातटं प्राप्य ततः क्रमेण भावे प्रतिष्ठाप्य च शृङ्गिभट्टम् ।**
**सन्यासमाप्तुं क्रमिकं धरायां सोऽन्वेषयामास गुरुं चिरेण ।। ३३ ।।**

व्याख्या - पम्पेति । ततः प्रस्थानानन्तरं, सः माधवाचार्यः क्रमेण पम्पातटं प्राप्य भावे भावसंवत्सरे, शृङ्गिभट्टं च प्रतिष्ठाप्य लोकपावनीतीरे इति शेषः । क्रमिकं क्रमप्राप्तं, संन्यासं आप्तुं गन्तुं, चिरेण बहुकालं, धरायां भूमौ, गुरुमाचार्यम्, अन्वेषयामास मृगयति स्म ।। ३३ ।। मूलम् -

**ततः कदाचिद्गुरुशङ्करार्यप्रतिष्ठितां वागधिदेवतां सः ।**
**द्रष्टुं विनिर्गत्य मुदा क्रमेण प्रपेदिवाञ्छृङ्गगिरिं मनोज्ञम् ।। ३४ ।।**

व्याख्या - तत इति । ततः अनन्तरं स माधवाचार्यः कदाचित् कस्मिंश्चित्काले गुरुणा शङ्करार्येण प्रतिष्ठितां वाचामधिदेवतां शारदां द्रष्टुं मुदा विनिर्गत्य क्रमेण शृङ्गगिरिं ऋष्यशृङ्गपुरं, प्रपेदिवान् गतवान् । प्रपूर्वात् पद्यतेः क्वसुप्रत्ययः । तथाह भगवान्नृसिंहः -

आकामावा इति प्रश्नस्योक्त्वा चोत्तरमग्रतः ।
वशीचकार भगवान् शृङ्गिभट्टं दयानिधिम् ।।
अयासीच्च ततो वर्यं बदर्याश्रममव्ययम् ।
शृङ्गिणा सहितस्तत्र व्यासानुग्रहवैभवात् ।।
त्रिकालज्ञानसम्पत्तिं प्राप विद्याश्च सर्वशः ।
ततो निर्गत्य पम्पाख्यं क्रमात् क्षेत्रं समाविशत् ।।
तत्र भावे शृङ्गिभट्टप्रतिष्ठां विरचय्य सः ।
क्रमसंन्यासलाभाय ऋष्यशृङ्गपुरीं ययौ ।।

इति ।। ३४ ।। मूलम् -

**तत्रत्यतुङ्गाभिधरम्यनद्यां स्नात्वाह्निकं स्वं रचयंस्तटेऽस्याः ।**
**भेरीमृदङ्गादिरवान्निशम्य कोऽयं समारम्भ इति न्यगादीत् ।। ३५ ।।**



Scanned with CamScanner

Scanned with CamScanner

व्याख्या - तत्रत्येति । स माधवाचार्यः, तत्रत्यायां शृङ्गगिरिसमीपवर्तिन्यां तुङ्गाभिधायां रम्यायां नद्यां स्नात्वा अस्याः नद्यास्तटे तीरे, स्वं स्वीयम्, आह्निकं रचयन् सन्, भेरीमृदङ्गादीनां रवान् शब्दान्, निशम्य अयं समारम्भः कः इति न्यगादीत् अवोचत् । पुरोवर्तिनमिति शेषः ।।३५ ।। मूलम् -

**श्रुत्वा तदीयं वचनं द्विजाग्र्यः कश्चिद्वचो माधवमेवमूचे ।**

**श्रीभारतीतीर्थगुरुस्तु वाणीं द्रष्टुं समायास्यति सर्ववन्द्यः ।। ३६ ।।**

व्याख्या - श्रुत्वेति । कश्चित् द्विजाग्र्यः ब्राह्मणोत्तमः, तदीयं माधवसम्बन्धि, वचनं श्रुत्वा, माधवम् एवं वक्ष्यमाणप्रकारेण, ऊचे । तदाह श्रीति - सर्ववन्द्यः श्रीभारतीतीर्थगुरुस्तु वाणीं भगवत्पादप्रतिष्ठितशारदां, द्रष्टुं समायास्यति आगमिष्यति इति ऊचे इति पूर्वेण सम्बन्धः ।। ३६ ।। मूलम् -

**निशम्य वाचं त्वभिगभ्य भक्त्या समर्प्य पादाम्बुजयोः फलानि ।**

**प्रणम्य यो वेदऋचं पठंत्सन्कृताञ्जलिस्तस्य पुरस्य तस्थौ ।। ३७ ।।**

व्याख्या - निशम्येति । स माधवाचार्यः, वाचं प्रतिवचनं, निशम्य भक्त्या अभिगम्य अभिमुखं गत्वा, पादाम्बुजयोः फलानि समर्प्य,

रिक्तहस्तेन नोपेयाद्राजानं दैवतं गुरुम्

इति स्मरणात् इति भावः । यो वेदेति ऋचम् -

यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।

तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः ।।

इति मन्त्रमित्यर्थः । पठन्त्सन् प्रणम्य कृताञ्जलिस्सन्, तस्य भारतीतीर्थस्य पुरः पुरोभागे, तस्थौ स्थितवान् । ष्ठा गतिनिवृत्तौ कर्तरि लिट् ।। ३७ ।। मूलम् -

**श्रीभारतीतीर्थयतीश्वरेऽस्मिन् विपन्महीभृत्कुलिशायिताभ्याम् ।**

**विलोक्य दृग्भ्यां कुशलानि पृच्छत्यनामयानि क्रमशोऽवदत्सः ।। ३८ ।।**

व्याख्या - श्रीति । अस्मिन् श्रीमति भारतीतीर्थयतीश्वरे, विपद एव महीभृतः पर्वताः, तेषु कुलिशायिताभ्यां वज्रवदाचरन्तीभ्यां, दृग्भ्यां नेत्राभ्यां, विलोक्य कुशलानि पृच्छति सति सः माधवाचार्यः, क्रमशः क्रमेण, अनामयानि आरोग्याणि, अवदत् ऊचे । यद्यद्विषयककुशलानि पृष्टवान्, तेषामनामयानि अवादीदिति भावः ।। ३८ ।। मूलम् -



Scanned with CamScanner

**वाग्देवतामन्दिरमेष गत्वा यतिस्समं तेन विधाय पूजाम् ।**

**बहिस्समागत्य सुखोपविष्टो बुधोपवेशाय ददावनुज्ञाम् ।। ३९ ।।**

व्याख्या - वागिति । एष भारतीतीर्थयतिः, तेन माधवाचार्येण समं, वाग्देवतायाश्शारदाया मन्दिरमालयं, गत्वा पूजां, शारदाया इति शेषः । विधाय बहिर्गर्भालयादिति शेषः । समागत्य सुखेनोपविष्टस्सन्बुधानामुपवेशाय अनुज्ञां ददौ दत्तवान् । यूयमुपविशतेत्युक्तवानित्यर्थः ।। ३९ ।। मूलम् -

**कस्मादुपागा निकटं ममाद्येत्यपृच्छदेनं यतिशेखरोऽयम् ।**

**संन्यासमाप्तुं क्रमिकं समागामित्यूचिवान्माधवदेशिकस्तम् ।। ४० ।।**

व्याख्या - कस्मादिति । अयं यतिशेखरो यतिकुलोत्तंसो भारतीतीर्थसद्गुरुः । अद्य मम निकटं सन्निधिं प्रति, कस्माद्धेतोः उपागास्समागतवान् । इत्येवम् एनं माधवाचार्यं, अपृच्छत् पप्रच्छ । माधवदेशिकस्तु क्रमिकं संन्यासं क्रमसंन्यासमिति यावत् । आप्तुं गन्तुं, समागामागतवानभवम् इति तं गुरुम्, ऊचिवानूचे । वचेर्लिटः क्वसुरादेशः ।। ४०।। मूलम् -

**स्वस्योपविष्टं पुरतो यतीशो मन्दं हसन्माधवमेवमूचे ।**

**सूत्रं तु यत्तत्तु समन्वयादित्यस्यार्थकं साधु निरूपयाद्य ।। ४१ ।।**

व्याख्या - स्वस्येति । यतीशो भारतीतीर्थयतीन्द्रः, मन्दं हसंत्सन् स्वस्य पुरतः उपविष्टं माधवम् एवं ऊचे । तदाह - सूत्रमिति । तत्तु समन्वयात् इति । एतदानुपूर्वीकमित्यर्थः । यत् सूत्रमस्ति शारीरकसूत्रेष्विति शेषः । अद्य तस्य सूत्रस्य अर्थमेवार्थकमिति स्वार्थे कः - अर्थमित्यर्थः। साधु सम्यक्, निरूपय वर्णय, इति पूर्वेण सम्बन्धः ।। ४१ ।। मूलम् -

**कृत्वा नमस्सोऽपि तदात्मविद्यासत्सम्प्रदायादिमदर्शकेभ्यः ।**

**ब्रह्मादिकेभ्योऽन्वयतापसेभ्यो वक्तुं तदर्थं ह्युदयुंक्त तत्र ।। ४२ ।।**

व्याख्या - कृत्वेति । स माधवोऽपि तदा भारतीतीर्थप्रश्नोत्तरक्षणे तस्यात्मविद्यायां ब्रह्मविद्यायां यस्सत्सम्प्रदायस्स आदिमो येषां तेषां प्रदर्शकेभ्यः ब्रह्मादिकेभ्यः अन्वयतापसेभ्यः वसिष्ठादिभ्यश्च नमः कृत्वा तत्र सभायां तस्य सूत्रस्यार्थं वक्तुं कथयितुम् उदयुंक्त उद्युक्तवान् । युजिर् योगे, कर्तरि लङ् । स्वराद्यन्तोपसर्गादितिमित्यात्मने पदम् ।। ४२ ।। मूलम् -

**नन्वक्रियार्थोपनिषद्गवीनां श्रुतित्वहानिर्भवतीति मन्ये ।**

**अनर्थकत्वं त्वतथाविधानां यदूचिवान् जैमिनितापसोऽस्मात् ।। ४३ ।।**



Scanned with CamScanner

व्याख्या - सर्वे वेदाः क्रियार्थास्ततश्चोपनिषदामपि कर्माङ्गकर्तृदेवताप्रतिपादकत्वेन क्रियार्थत्वाच्छ्रुतित्वम्, आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामिति जैमिन्युक्तेरिति पूर्वमीमांसकसमयः । उपनिषदो न कर्माङ्गदेवताकर्त्रादिप्रदर्शकाः । किन्तु साक्षादेव ब्रह्मस्वरूपनिरूपकाः । अन्यथा कर्मोक्तेन्द्रादिदेवतानामिव ब्रह्मणोऽप्यनित्यत्वापत्तिरित्यौपनिषदानां राद्धान्तः । तत्र नन्वित्यादिपद्यद्वयेन पूर्वमीमांसकमतमुपन्यस्यति नन्विति । श्लोकार्थस्तु - अक्रियार्थानां कर्मानुपयुक्तानामुपनिषद्गवीनामुपनिषद्वचसाम् । गोरतद्धितलुकीति तत्पुरुषाट्टच्। श्रुतित्वहानिश्श्रुतित्वाभावः। भवति इति मन्ये जानामि । कुतः, यद्यस्मात्कारणात्, जैमिनिरिति तापसो मुनिः । तथाविधानामक्रियार्थानां वचनानाम् अनर्थकत्वं निष्प्रयोजनत्वम् ऊचिवान् उवाच । तथा च जैमिनिसूत्रम् - आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामिति । अस्मादित्युत्तरश्लोकेन सम्बध्यते ।। ४३ ।।

**क्रियाङ्गकर्त्रादिकबोधनेन वोपासनावाक्यगतात्मबोधात् ।**

**क्रियार्थतादिप्रतिपादनेन तासां श्रुतित्वं भवतीति चेन्न ।। ४४ ।।**

अस्माज्जैमिनिना एवं सूत्रितत्वाद्धेतोः, क्रियाङ्गानां कर्माङ्गानां, कर्त्रादिकानाम्, आदिना देवतासाधनादीनां सङ्ग्रहः । बोधनेन हेतुना, वा अथवा, आत्मानमुपासीतेत्याद्युपासना वाक्यगतस्यात्मनो बोधाद्वा हेतोः, क्रियार्थतायाः आदिशब्देनोपासनाविधिशेषत्वस्य च प्रतिपादनेन, तासामुपनिषदां, श्रुतित्वं भवति इति चेदेवं वेत्सि चेदित्यर्थः । न तथा जानीहीत्यर्थः । हेतुरुत्तरश्लोके निरूपयिष्यते ।। ४४ ।। मूलम् -

**पुरन्दरादिष्विव शाश्वतात्मन्यनित्यतायाः प्रथमेव भासात् ।**

**उपास्तिभेदेन विमुक्तितारतम्यस्य चान्ते सुदृढं प्रतीतेः ।। ४५ ।।**

व्याख्या - पुरन्दरादिष्विति । पूर्वश्लोकान्तगतो नशब्दोऽत्रानुषज्यते । यदुक्तं क्रियार्थत्वेनोपासनावाक्यगतात्मार्पणेन वा उपनिषदां श्रुतित्वमिति, तन्न । कुतः । प्रथमे क्रियाङ्गकर्त्रादिकबोधनेनोपनिषदां श्रुतित्वमिति भवदुक्तप्रथमकल्पे पुरन्दरादिष्विन्द्रादिष्विव शाश्वतात्मनि अनित्यताया अनित्यत्वस्य अवभासाद्धेतोः अन्ते उपासनावाक्यगतात्मस्वरूप निरूपणेन श्रुतित्वमिति द्वितीयकल्पे उपास्तीनां भेदेन तल्लभ्यायां विमुक्तौ तारतम्यस्य भेदस्य सुदृढं यथा तथा प्रतीतेर्हेतोः, अतः भवदुक्तकल्पद्वयमपि न घटत इत्यर्थः ।। ४५ ।। मूलम् -

**काण्डान्तरारम्भणतस्त्वदुक्तक्रियार्थता नात्मपरश्रुतीनाम् ।**



Scanned with CamScanner

Scanned with CamScanner

**इत्थं विदित्वा प्रणिनाय सूत्रं व्यासो मुनिस्तत्तु समन्वयात्सः ।। ४६ ।।**

व्याख्या - औपनिषदसिद्धान्तरीत्या सूत्रमवतारयति काण्डान्तरेति । अन्यत्काण्डं काण्डान्तरं, ज्ञानकाण्डमित्यर्थः । तस्यारम्भणतो हेतोः, आत्मपरश्रुतीनां साक्षाद् ब्रह्मप्रतिपादकोपनिषद्गिरां, त्वदुक्तक्रियार्थता न सिद्ध्यति । इत्थम् एवं, विदित्वा ज्ञात्वा, सः व्यासः मुनिः, तत्तु समन्वयात् सूत्रं तत्तुसमन्वयादित्येतत्सूत्रमित्यर्थः । प्रणिनाय चक्रे ।। ४६ ।।

मूलम् -

**उपक्रमाद्यैः श्रुतिमस्तकानां समन्वयादात्मनि चित्स्वरूपे ।**
**तद्ब्रह्म साक्षाच्छ्रुतिमूर्धवेद्यं न चान्यथेत्याह तुरेवमर्थः ।। ४७ ।।**

व्याख्या - औपनिषदसम्प्रदायानुरोधेन सूत्रार्थमाह उपक्रमाद्यैरिति । तत्तु समन्वयादिति पारमर्षं सूत्रम् । तच्च पदत्रयात्मकम् । अन्वयस्सम्बन्धः । स च कासां कुत्रेत्याकांक्षायामाह - श्रुतिमस्तकानां समन्वयात् । आत्मनि चित्स्वरूपे इति । अन्वये सम्यक्त्वं च तात्पर्यनिर्णयहेतुभूतलिङ्गषट्कवत्त्वेनेत्याह - उपक्रमाद्यैरिति। एतादृशहेतुना पक्षभूते ब्रह्मणि साध्यमाह - तद्ब्रह्म साक्षाच्छ्रुतिमूर्धवेद्यमिति । भिन्नप्रकरणपठितानामुपनिषदां कर्तृदेवताद्यप्रतिपादकत्वेन कर्मशेषत्वाभावात्त्वदुक्तकर्माङ्गत्वं न घटत इत्याशयेन तुशब्दार्थमाह न चान्यथेत्याह तुरिति। एतावता निरूपणेनेत्थं सूत्रार्थः सम्पन्न इत्याह - एवमर्थ इति । उपक्रमादयश्चाभियुक्तैरुक्ताः। तथाहि -

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ।। इति ।

सदेव सौम्येदमग्र आसीदित्युपक्रमः । ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इत्युपसंहारः । तयोर्ब्रह्मविषयत्वेनैकरूपत्वादेकं लिङ्गम् । तत्त्वमसीत्यसकृदुक्तिरभ्यासः। मानान्तरागम्यत्वमपूर्वत्वम् । एकविषयज्ञानेन सर्वविज्ञानं फलम्। सृष्टिस्थितिप्रलयप्रवेशनियमनानि पञ्चार्थवादाः । सृष्ट्या सार्वात्म्यम् । स्थित्या सर्वाधिष्ठानत्वम्। प्रलयेनाद्वितीयत्वम् । प्रवेशेन जीवब्रह्मैक्यम् । नियमनेन सर्वान्तरत्वं ज्ञेयम् ।

श्लोकार्थस्तु स्पष्टोऽपि विच्छित्तिभङ्गभिया निरूप्यते - उपक्रमाद्यैः इति । श्रुतिमस्तकानां वेदान्तानां, चित्स्वरूपे चिद्रूपे, आत्मनि ब्रह्मणि, उपक्रमाद्यैः

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।



Scanned with CamScanner
Scanned with CamScanner

अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ।।

इत्यभियुक्तोक्तैस्तात्पर्यनिर्णयहेतुभूतैष्षड्भिर्लिङ्गैः समन्वयस्सम्बन्धो निरूप्य निरूपकभावरूपः समन्वयस्तस्माद्धेतोः तत् ब्रह्म, साक्षात्स्वातन्त्र्येण, क्रियास्पर्शमन्तरेणेति यावत् । श्रुतिमूर्धभिरुपनिषद्भिः, वेद्यं भवति । अन्यथा कर्माङ्गतयेत्यर्थः । तद्ब्रह्म, न च वेद्यं न ज्ञातव्यं भवति । इति एवं, तुः तुशब्दः, आह वक्ति, एवमित्थम्, अर्थः सूत्रार्थः इति। तयोक्तं शङ्करभगवत्पादैः शारीरकसूत्रभाष्ये -

तुः(शब्दः) पूर्वपक्षव्यावृत्त्यर्थः । तद्ब्रह्म सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादवगम्यते । कथम् ? समन्वयात् । सर्वेषु (हि) वेदान्तेषु वाक्यानि तात्पर्येणैतस्यार्थस्य प्रतिपादकत्वेन समनुगतानीति ।

तस्मात्तत्त्वमसीत्यादयो वेदान्तास्साक्षाद्ब्रह्मण्यवसिता इति सिद्धम् । न चानुष्ठानमन्तरेण श्रुतीनां प्रयोजनवत्त्वं न सिद्ध्यतीति भ्रमितव्यम् । नायं सर्प इत्यादाविव बोधादनर्थनिवृत्तेस्सम्भवात् ।। ४७ ।। मूलम् -

**इत्थं जगन्मान्यमहर्षिसूत्रस्यार्थं ब्रुवाणं तमवेक्ष्य योगी ।**

**आक्षिप्य लब्ध्वोत्तरमन्तरङ्गे मोदं दृशोर्बाष्पमुवाह धीमान् ।। ४८ ।।**

व्याख्या - इत्थमिति । धीमान्पण्डितः, योगी भारतीतीर्थयतिः, इत्थम् एवं, जगतां मान्यस्य माननीयस्य, महर्षेः ऋषिश्रेष्ठस्य व्यासस्य, यत्सूत्रं तत्तु समन्वयादिति, तस्य अर्थं ब्रुवाणं जल्पन्तं, माधवाचार्यम् अवेक्ष्य दृष्ट्वा, आक्षिप्य उत्तरं लब्ध्वा अन्तरङ्गे मनसि, मोदं सन्तोषं, दृशोर्नेत्रयोर्बाष्पमानन्द बाष्पं उवाह वहति स्म ।। ४८ ।। मूलम् -

**योग्यं तमभ्यागतमेष मत्वा चत्वारि वाक्यान्युपदिश्य तस्मै ।**

**संन्यासधर्मानपि किञ्च विद्यारण्याभिधां यूनि ददौ यतीन्द्रः ।। ४९।।**

व्याख्या - योग्यमिति । एष यतीन्द्रः भारतीतीर्थः, अभ्यागतं तं माधवाचार्यं, योग्यं मत्वा यूनि युवसंवत्सरे, तस्मै माधवाचार्याय, चत्वारि वाक्यानि, चतुर्वेदगतानीति शेषः । उपदिश्य संन्यासधर्मानपि उपदिश्य, किञ्च विद्यारण्य इत्यभिधां, ददौ दत्तवान् । वाक्यचतुष्टयं तु निरूपयामः - प्रज्ञानं ब्रह्मेति ऋग्वेदगतं वाक्यम् । अहं ब्रह्मास्मीति यजुर्वेदगतम् । तत्त्वमसीति सामवेदगतम् । अयमात्मा ब्रह्मेत्यथर्वणवेदगतं वाक्यम् । विद्यारण्यविजये नृसिंहीये द्वाविंशाध्याये उक्तम् -



Scanned with CamScanner

युवाख्याब्दे पूर्णिमायां भारतीतीर्थसद्गुरुः ।
संन्यासं समुपादत्त माधवो ज्ञानदायकम् ।
विद्यारण्य इति प्रादादाख्यां तस्मै जगद्गुरुः ।।४९।। मूलम् -

**श्रीशङ्करच्छात्रसुरेश्वरार्यशिष्यक्रमारूढयतेस्सकाशात् ।**
**लब्धाश्रमोऽयं विरराज योगी मूर्तीभवन्मुक्तिरिवात्र भूम्याम्।। ५०।।**

व्याख्या - श्रीति । श्रीशङ्करस्य च्छात्रः शिष्यो यस्सुरेश्वरार्यस्तस्य शिष्यक्रमं शिष्यपरम्परामधिरूढस्य यतेः भारतीतीर्थस्य सकाशात् लब्धाश्रमः अयं योगी विद्यारण्यमुनिः, भूम्याम् अमूर्ता मूर्ता सम्पाद्यमाना भवन्ती मूर्तीभवन्ती सा चासौ मुक्तिश्च मूर्तीभवन्मुक्तिः सेव विरराज दिदीपे ।। ५०।। मूलम् -

**कृत्वाग्रहारं किल तत्र विद्यारण्याभिधाङ्कं यतिसार्वभौमः ।**
**चक्रेऽथ विद्यादिमशङ्करस्य पूजां प्रतिष्ठामपि शृङ्गिणोऽयम् ।। ५१ ।।**

व्याख्या - शृङ्गगिरौ यदतनोद्विद्यारण्यस्तदाह कृत्वेति। यतिसार्वभौमो यतिश्रेष्ठः, अयं विद्यारण्यः, तत्र शृङ्गगिरौ, विद्यारण्याभिधाङ्कं विद्यारण्यनामाङ्कितं, अग्रहारं कृत्वा, विद्यारण्यपुराभिधमग्रहारं कृत्वेत्यर्थः । किलेति वाक्यालङ्कारे । अथ अनन्तरं विद्यादिमशङ्करस्य विद्याशङ्करस्येत्यर्थः । पूजां शृङ्गिणश्शृङ्गिभट्टस्य प्रतिष्ठामपि चक्रे कृतवान् ।। ५१ ।। मूलम् -

**गुरोरथाज्ञामधिगत्य योगी विनिर्गतः शृङ्गगिरेर्महात्मा ।**
**पम्पातटं प्राप मनोज्ञकुञ्जं यत्र प्रसन्ना जगदीश्वरी सा ।। ५२ ।।**

व्याख्या - गुरोरिति। अथ शृङ्गिभट्टप्रतिष्ठानन्तरं महात्मा महानुभावः योगी विद्यारण्यमुनिः, गुरोर्भारतीतीर्थस्य, आज्ञाम् अधिगत्य शृङ्गगिरेः सकाशाद्विनिर्गतस्सन् मनोज्ञा मनोहराः कुञ्जा यस्मिंस्तम् । निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे इत्यमरः। पम्पायास्सरसस्तटं प्राप । यत्र पम्पातटे सा जगदीश्वरी भुवनेश्वरी, प्रसन्ना बभूव । इत आरभ्य पद्याष्टके समपेक्षितं प्रमाणमितोऽष्टमे श्रुत्वा तयोः स्वप्नकथामिति श्लोके उदाहरिष्यते ।। ५२ ।। मूलम् -

**अथैकदा स्वप्न उपेत्य देवः श्रीमद्विरूपाक्ष इति प्रसिद्धः ।**
**भूमण्डलं म्लेच्छकिरातलोकव्याप्तं समालोक्य यतीन्द्रमूचे ।। ५३ ।।**

व्याख्या - अथेति । अथ पम्पातीरप्राप्त्यनन्तरम्, एकदा एकस्मिन्, दिवसे श्रीमान्



Scanned with CamScanner
Scanned with CamScanner

विरूपाक्ष इति प्रसिद्धो देवः म्लेंछकिरातलोकैर्व्याप्तं भूमण्डलं समालोक्य दृष्ट्वा, स्वप्ने विद्यारण्यस्येति शेषः। उपेत्य प्राप्य, स्वप्ने समागत्येत्यर्थः । यतीन्द्रं विद्यारण्यम्, ऊचे वक्ष्यमाणमिति शेषः ।। ५३ ।। मूलम् -

**श्रीवीररुद्रस्य धनालयेशौ तस्यात्ययात्तीर्थकृते प्रयातौ ।**

**दूरे वसन्तौ किल योजनेऽस्मादायास्यतो द्वौ पुरुषौ महान्तौ ।। ५४ ।।**

व्याख्या - अथ द्वाभ्यां स्वप्नगतविरूपाक्षोक्तिमाह श्रीवीररुद्रस्येति, एक इति । श्रीमतो वीररुद्रस्य, धनालयस्य कोशगृहस्येशौ अध्यक्षौ, तस्य प्रतापरुद्रस्य, अत्ययान्नाशाद्धेतोः, तीर्थकृते तीर्थयात्रार्थमित्यर्थः। प्रयातौ प्रस्थितौ, महान्तौ सम्पन्नौ, द्वौ पुरुषौ, अस्मात्पम्पातटात्, योजने योजनपरिमिते, दूरे वसन्तौ भवता किलेति वाक्यालङ्कारे ।। ५४ ।। मूलम् -

**एकस्तयोर्बुक्कपदाभिधेयः परस्तु मन्त्री हरिशङ्कराख्यः ।**

**ताभ्यां विनिर्माप्य पुरीं किलाद्यं प्रभुं परं मन्त्रिणमाशु कुर्याः ।। ५५ ।।**

व्याख्या - एक इति । तयोः पूर्वोक्तपुरुषयोर्मध्ये, एकः बुक्क इति पदस्याभिधेयो वाच्यः, बुक्कनामधेय इति यावत् । परोऽन्यस्तु, मन्त्री प्रतापरुद्रसचिवः, हरिशङ्कराख्यः हरिहरनामधेयः, छन्दोभङ्गभिया हरिशङ्कर इत्युक्तम् । ताभ्यां बुक्कहरिहराभ्यां, पुरीं विनिर्माप्य निर्माणं कारयित्वा, किल आशु शीघ्रम्, आद्यं बुक्कराजं, प्रभुं राजानं, परमन्यं, हरिहरं मन्त्रिणं सचिवं, युवराजमिति यावत् । कुर्याः कुरुष्व ।। ५५ ।। मूलम् -

**इतीरयित्वा भगवान्महेशस्तस्यां निशायां समुपेयिवांस्तौ ।**

**स्वप्ने वचस्सादरमेवमूचे प्रजासु देवो दयमानचेताः ।। ५६ ।।**

व्याख्या - इतीति । प्रजासु दयमानं चेतो यस्य स तथोक्तः भगवान् । महेशो विरूपाक्षदेवः, इति पूर्वोक्तरीत्या, ईरयित्वा स्वप्ने विद्यारण्याय कथयित्वा तस्यां निशायां रात्रौ, तौ बुक्कहरिहरौ, समुपेयिवान् प्राप्तस्सन् । स्वप्ने सादरं सविश्वासं यथा तथा एवं वक्ष्यमाणप्रकारं, वचः ऊचे ।। ५६ ।। मूलम् -

**यातं विरूपाक्षनिकेतनं द्रागितं च विद्यावनतापसेन्द्रम् ।**

**पुरीं विनिर्माय समं युवाभ्यां स वां प्रभुं मन्त्रिणमाशु कुर्यात् ।। ५७ ।।**

व्याख्या - स्वप्नोक्तिमाह यातमिति । विरूपाक्षस्य निकेतनं मन्दिरं द्राक् शीघ्रम् । नि० द्राङ्मङ्क्षु सपदि द्रुते इत्यमरः । यातं प्राप्नुतम्, युवाम् इति शेषः । युवां विद्यावनो विद्यारण्य



Scanned with CamScanner

इति यस्तापसेन्द्रस्तम् इतं लभेयाथाम् । या प्रापणे, इणगतौ, विधौ कर्तरि लोट् मध्यमपुरुषद्विवचनम्। स विद्यारण्यमुनिः । युवाभ्यां समं सह, पुरीं विनिर्माय, वां युवयोर्मध्ये इत्यर्थः । एकं प्रभुं परं मन्त्रिणम् आशु शीघ्रं, कुर्याद्विदध्यात्। सम्भावनायां लिङ् ।। ५७ ।। मूलम् -

**परेद्युरेतौ समुपेत्य विद्यारण्यं विरूपाक्षनिकेतनस्थम् ।**

**प्रणम्य च स्वप्नकथां स्वकीयामवोचतां भक्तिविनीतियुक्तौ ।। ५८ ।।**

व्याख्या - परेद्युरिति । परेद्युरन्येद्युः, एतौ बुक्कहरिहरौ, विरूपाक्षनिकेतनस्थं विद्यारण्यं समुपेत्य लब्ध्वा, प्रणम्य नमस्कृत्य, च भक्त्या विनीत्या विनयेन, च युक्तौ सन्तौ स्वकीयामात्मीयां, स्वप्नकथां अवोचतामूचतुः ।। ५८ ।। मूलम् -

**श्रुत्वा तयोः स्वप्नकथां स्वकीयं स्वप्नं च बुद्ध्वा यतिशेखरोऽयम् ।**

**आवश्यकत्वं समवेक्ष्य कार्यस्यामन्त्रयत्साकमयं तु ताभ्याम् ।। ५९ ।।**

व्याख्या - श्रुत्वेति । अयं यतिशेखरो विद्यारण्यमुनिः तयोर्बुक्कहरिहरयोः स्वप्नकथां श्रुत्वा, स्वकीयं च स्वप्नं बुद्ध्वा ज्ञात्वा, कार्यस्य पुरनिर्माणरूपकृत्यस्य, आवश्यकत्वं समवेक्ष्य ज्ञात्वा, ताभ्यां बुक्कहरिहराभ्यां, समं तु सहैव, अमन्त्रयत् मन्त्रयामास पर्यालोचितवान्। तदुक्तं भगवता नृसिंहमुनिना -

ततो निर्गत्य पम्पाख्यं क्रमात्क्षेत्रं पुनर्ययौ ।
विरूपाक्षस्य भजनं कुर्वंस्तत्र स्थितोऽभवत् ।।
विद्यारण्ये विरूपाक्षदेवालयमुपाश्रिते ।
चन्द्रमौलीशितुः पूजां समाचरति सर्वदा ।।
जातु स्वप्ने शिवस्तस्मै जगादैवमनामयम् ।
भूमण्डलमिदं म्लेंछकिराताद्यैरुपद्रुतम् ।।
आयास्यतो महान्तौ द्वौ द्वाभ्यामारचयन्पुरीम् ।
विधाय पट्टबन्धं च तत्र स्थापय तावपि ।।
उज्जयिन्या हरिहरबुक्कनामाङ्कितावुभौ ।
वीररुद्रमहीभर्तुः कोशगेहाधिकारिणौ ।।
तस्यात्यये विषादेन तीर्थयात्राविधायिनौ ।
योजनादूषतुर्दूरे विरूपाक्षदिदृक्षया ।।



Scanned with CamScanner

Scanned with CamScanner

तयोः स्वप्ने तथा तस्यां रात्र्यामाह च शङ्करः ।
श्रृणुतं भो युवां यातं विरूपाक्षस्य सन्निधिम् ।।
अध्यास्ते सुमहाभिक्षुर्लोकानुग्रहकाङ्क्षया ।
निर्माणं नगरस्यापि कृत्वा वां स्थापयेदिति ।।
अपरेद्युर्यथापूर्वं विरूपाक्षालयस्थिते ।
नियमं कुर्वति स्वीयं विद्यारण्यमुनीश्वरे ।।
समागत्य च मध्याह्ने तयोः स्वं वन्दमानयोः ।
ब्रुवतोस्समुदन्तं च स्वप्नसम्भाषणादिकम् ।।
भावं बुद्ध्वा निजोदन्तं श्रावयित्वा च तावुभौ ।
संवादात् स्वप्नयोर्मत्वा कार्यस्यावश्यभाविताम् ।।

इति ।। ५९ ।। मूलम् -

**पुरादिनिर्माणकृते विचिन्तां वितेनिरे यावदिह त्रयोऽमी ।**
**तावत्समागत्य स मेषपालो गिरं महात्मा निजगाद चैवम् ।। ६० ।।**

व्याख्या - पुरेति । त्रयः अमी विद्यारण्यबुक्कहरिहराः, इह अस्मिन्, पम्पातटे पुरादीनां निर्माणकृते निर्माणाय, विचिन्तां यावद्यदा, वितेनिरे चक्रुः, तावत्तस्मिंत्समये, महात्मा सम्प्राप्तशङ्करानुग्रहत्वान्महानुभावः, सः प्रसिद्धः, मेषपालः समागत्य एवं वक्ष्यमाणप्रकारां, गिरं जगाद उवाच । इत आरभ्य श्लोकषट्के समपेक्षणीयं प्रमाणवचनं इतः षष्ठे श्रीचक्ररूपेणेति पद्ये निरूपयिष्यते ।। ६० ।। मूलम् -

**श्रीतुङ्गभद्राभिधरम्यनद्या दक्षप्रतीरस्थगिरिस्थदेवी ।**
**दद्यादभीष्टं भवतां न नाम सङ्कीर्तयध्वं मम तत्र यूयम् ।। ६१ ।।**

व्याख्या - मेषपालवचनमाह श्रीति । श्रीमत्यास्तुङ्गभद्राभिधायाः रम्यायाः नद्याः, दक्षप्रतीरस्थो दक्षिणतीरस्थो, यो गिरिः पर्वतो हेमकूटाभिधस्तत्रस्थदेवी भुवनेश्वरी, भवतामभीष्टमिष्टार्थं, दद्यादितरेत् । तत्र देवीसन्निधौ, यूयं मम नाम न सङ्कीर्तयध्वं न कीर्तयत ।। ६१ ।। मूलम् -

**देवीमथासाद्य समं तु ताभ्यामभ्यर्चयंस्तापसपुङ्गवोऽयम् ।**
**देयो बलिर्मेषपतिर्ममेति शुश्राव वाणीमशरीरिणीं ताम् ।। ६२ ।।**



Scanned with CamScanner

व्याख्या - देवीमिति । अथ मेषपालोक्त्यनन्तरम्, अयं तापसपुङ्गवो विद्यारण्यमुनिः, ताभ्यां बुक्कहरिहराभ्यां, समं देवीम् आसाद्य प्राप्य, अभ्यर्चयन् सन् मम मेषपतिः मेषपालः, बलिः देय इत्येवंरूपामशरीरिणीं तां वाणीं वाचं, शुश्राव श्रुतवान् ।। ६२ ।। मूलम् -

**तस्योपहारीकृतये त्रयोऽमी संमन्त्र्य तं मेषपतिं समेत्य ।**

**निवेदयाञ्चक्रुरिमां प्रवृत्तिं तथास्त्विति प्राह स मेषपालः ।। ६३ ।।**

व्याख्या - तस्येति । अमी त्रयः विद्यारण्यबुक्कहरिहराः, तस्य मेषपालस्य, उपहारीकृतये उपदीकरणाय, सम्मन्त्र्य तं मेषपतिं समेत्य इमामशरीरवाक्सम्बन्धिनीं, प्रवृत्तिं वृत्तान्तं, निवेदयाञ्चक्रुः निवेदितवन्तः, कथयामासुरिति यावत् । स मेषपालः तथा अस्तु इति प्राह ।। ६३ ।।

मूलम् -

**साकं स वै मेषपतिर्महात्मा देव्यालयं प्राप्य विवेश तस्याम् ।**

**देवी ततस्तोषमवाप्य विद्यारण्यं यतीशानमवोचदेवम् ।। ६४ ।।**

व्याख्या - साकमिति । सः मेषपतिः तैस्साकं देव्यालयं प्राप्य तस्यां देव्यां, विवेश प्रविष्टवान्, देव्यां लीनोऽभवदिति यावत् । ततो मेषपालप्रवेशा नन्तरं, देवी तोषं सन्तोषम्, अवाप्य यतीशानं यतिश्रेष्ठं, विद्यारण्यम् एवं वक्ष्यमाणप्रकारेण अवोचत् ।। ६४ ।। मूलम् -

**श्रीचक्ररूपेण विनिर्मिता चेत्पुरी त्वया तत्र सुवर्णवृष्टिम् ।**

**मुदा विधास्यामि तदा प्रयाहि तूर्णं यतस्वास्य विधौ पुरस्य।। ६५ ।।**

व्याख्या - देवीवचनमाह श्रीति । त्वया श्रीचक्ररूपेण श्रीचक्राकारेण, पुरी विनिर्मिता रचिता, चेत् तदा तत्र पुर्यां, मुदा सुवर्णवृष्टिं विधास्यामि करिष्यामि । प्रयाहि गच्छ, तूर्णं शीघ्रेण, अस्य पुरस्य, विधौ रचनाविषये, यतस्व यत्नं कुरु, इत्यवोचदिति पूर्वेणान्वयः । तदुक्तं नृसिंहयोगिना -

त्रयस्ते नगरारम्भे यावच्चिन्तां वितेनिरे ।
तावत्कश्चिन्मेषपालश्शङ्करानुग्रहेरितः ।।
विदित्वा हृदयं तेषामिदमूचे परं वचः ।
तीरे तु तुङ्गभद्राया दक्षिणे पर्वते स्थिता ।।
महादेवी त्वभीष्टं वः शंसेत्किञ्च ममाभिधा ।
न ग्राह्यानेन चार्थोऽयं समुदीरित इत्यपि ।।



Scanned with CamScanner

तद्देवीभवनं प्राप्य रचयामासुरर्चनम् ।।
देवी साप्यशरीरोत्थवाचा मेषपतौ कृते ।
उपहारे वदेयं व इति तान्प्रत्यवोचत ।।
मेषपालसमक्षं तेष्वागतेषु पुनस्ततः ।
स्वोपहारादिकां वार्तां परोक्षामपि च स्वतः ।।
तेभ्यः प्रागेव तत्रत्यांस्वमाहात्म्येन शंसति ।
स्वपरोक्षार्थविज्ञाता महानित्यवधार्य तम् ।।
तस्योपहारीकृतये सान्त्वयत्सु तदा पुनः ।
तेन चैवं समाचख्ये देवानामिष्टसिद्धये ।।
अदादसून्दधीचिः प्राग्युष्माकं कार्यसिद्धये ।
वितरेयं शरीरं वो ममैकं कुरुतेप्सितम् ।।
त्रयोदश त्वया साकं येऽपि स्युर्भाविनो नृपाः ।
ते मदीयाभिधानाङ्काः यूयं विख्यातिमाप्नुथ ।।
इत्युदीर्याथ सविधं देव्याः प्राप्य तिरोहितः ।
तस्यामन्तर्भवन्नेष न बहिः क्वाप्यलक्ष्यत ।।
देव्यथाज्ञापयामास विद्यारण्यं यतीश्वरम् ।
त्वया श्रीचक्ररूपेण नगरे निर्मिते सति ।।
तत्पुराभ्यन्तरे सम्यक् हेमवृष्टिर्भविष्यति ।
सत्रिपादत्रिघटिकापर्यन्तमिति सोऽप्यथ ।। इति ।

।। ६५ ।। मूलम् -

**निर्मातुकामो नगरीं यतीन्द्रस्सश्रृङ्गिभट्टो बदरीमुपेत्य ।**
**व्यासप्रसादात्सुमुहूर्तमित्वा पम्पातटं प्राप जवान्मनोज्ञम् ।। ६६ ।।**

व्याख्या - निर्मातुकाम इति । यतीन्द्रो विद्यारण्यमुनिः, नगरीं निर्मातुं कामो अभिलाषो यस्य स तथोक्तः, सश्रृङ्गिभट्टस्सन्, बदरीम् उपेत्य प्राप्य, व्यासस्य प्रसादादनुग्रहात्, सुमुहूर्तं इत्वा ज्ञात्वा, इण्गतौ । गत्यर्थानां ज्ञानार्थत्वमित्यभियुक्तोक्त्या इण्धातोर्ज्ञानार्थकत्वम् । जवाच्छीघ्रेण मनोज्ञं पम्पातटं प्राप जगाम ।। ६६ ।। मूलम् -



Scanned with CamScanner

**नागेषु सूर्यान्वितशालिवाहशके गते धातरि राधशुक्ले ।**
**तिथौ च सप्तम्यभिधे व्यतानीत्पुरं स विद्यानगराभिधानम् ।। ६७ ।।**

व्याख्या - पुरनिर्माणशकादीनाह नागेष्विति । नागा अष्टौ, इषवः पञ्च, सूर्या द्वादश, तैरन्विते शालिवाहशके अष्टपञ्चाशदुत्तरद्वादशशतीमितशके इत्यर्थः। गते सति धातरि धातृवत्सरे, राधशुक्ले वैशाखशुक्लपक्षे, सप्तम्यभिधे सप्तमीनामके, तिथौ । नि० - तदाद्यास्तिथयो द्वयोः इत्यमरः । सः विद्यारण्य मुनिः । विद्यानगराभिधानं पुरं, व्यतानीत् अकरोत् । अस्य विजयनगरमित्यपरं नाम । तदुक्तं भेदधिक्कारकारिभिः नृसिंहाश्रमिश्रीचरणैः -

श्रृंगिणा सहितो व्यासं दृष्ट्वा विज्ञाप्य तत्कथाम् ।
व्यासप्रसादाद्विज्ञाय सुमुहूर्तं विनिर्गतः ।।
अकल्पयत्पुरं रम्यं यथा देव्या समीरितम् ।।
नागेष्वर्के नियमितशके शालिवाहस्य याते
धातर्यब्दे शुभसमुचिते माधवे मासि नाम्ना ।
शुक्ले पक्षे सुगुणपितृभे सूर्यवारे सुलग्ने
सप्तम्यां श्रीविजयनगरं निर्ममेऽसौ यतीन्द्रः ।। इति ।। मूलम् -

**ततस्सुवर्णस्य चकार वृष्टिं पुरान्तरे सा मुनिनिर्मितेऽस्मिन् ।**
**विधाय यन्त्रोद्धृतिमत्र विद्यारण्योऽपि सिंहासनमाततान।। ६८ ।।**

व्याख्या - तत इति । ततो नगरनिर्माणानन्तरं, सा देवी, मुनिना विद्यारण्येन, निर्मिते अस्मिन् पुरान्तरे मध्यदेशे, नि० -

अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये ।
छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ।।

इत्यमरः । सुवर्णस्य वृष्टिं चकार । विद्यारण्योऽपि यन्त्रोद्धृतिं यन्त्रोद्धारं, विधाय सिंहासनं तत्र विद्यानगरे, आततान चक्रे । तदुक्तं नृसिंहगुरुचरणैः -

तदा वृष्टिः समभवत्सुवर्णस्य पुरोत्तमे ।
योगमायाप्रयुक्ता सा विद्यारण्ययतीशितुः ।
हेमसिंहासनं तत्र प्राकल्पयत योगिराट् ।।

इति ।। ६८ ।। मूलम् -



Scanned with CamScanner
Scanned with CamScanner

**श्रीबुक्कराजे हरिशङ्करे च निधाय तां राजधुरां महात्मा ।**
**यतीश्वरोऽयं जगतां हिताय भाष्याणि चक्रे निखिलश्रुतीनाम् ।। ६९ ।।**

व्याख्या - श्रीति । महात्मा अयं यतीश्वरः श्रीबुक्कराजे हरिशङ्करे हरिहरे, च राज्यस्य धूर्भारो राज्यधुरा ताम्, ऋक्पूरब्धूरित्यादिना समासान्तोऽकारप्रत्ययः । निधाय स्थापयित्वा, जगतां हिताय निखिलश्रुतीनां सर्ववेदानां, भाष्याणि चक्रे । तदुक्तम् -

ततो हरिहरे बुक्कराजे राज्यं निवेश्य च ।
यतीन्द्रस्सोऽपि लोकानामनुग्रहचिकीर्षया ।
भाष्याणि चक्रे वेदानामनुष्ठानाय कर्मणाम् ।।

इति ।। ६९ ।। मूलम् -

**तद्भाष्यसंशुद्धिकृते महर्षिव्यासाश्रमं गन्तुमयं समिच्छन् ।**
**तं ब्रह्मरक्षस्त्वमितं यतीन्द्रश्श्रीशृंगिभट्टं सरणौ लुलोके ।। ७० ।।**

व्याख्या - तदिति । अयं यतीन्द्रो विद्यारण्यमुनिः, तेषां भाष्याणां संशुद्धिकृते शोधनाय, महर्षेः व्यासस्याश्रमं गन्तुं समिच्छंत्सन् ब्रह्मरक्षस्त्वम् इतं प्राप्तं, तं पूर्वपरिचितत्वेन प्रसिद्धं, शृंगिभट्टं सरणौ मार्गे, लुलोके ददर्श । तदुक्तं विद्यारण्यविजये नृसिंहगुरुचरणैः -

पुनस्तद्भाष्यसंशुद्ध्यै गच्छन् वाराणसीं पुरीम् ।
मार्गे शृङ्गिणमभ्येत्य ब्रह्मरक्षस्त्वमागतम् ।
आकामावा इति प्रश्नस्योक्त्वा चोत्तरमग्रतः ।
वशीकृतो यस्तेनैव सह काशीं समाययौ ।।

इति ।। ७० ।। मूलम् -

**व्यासो महर्षिः क्व नु तिष्ठतीति पप्रच्छ तं शृङ्गिणमेष योगी ।**
**काश्यां तु गङ्गासरितस्तटेऽयं गञ्जालयेऽस्तीति जगाद शृङ्गी ।। ७१ ।।**

व्याख्या - व्यास इति । एषः योगी विद्यारण्यमुनिः, महर्षिर्व्यासः क्व नु तिष्ठति इति तं शृङ्गिणं पप्रच्छ पृष्टवान् । शृंगी शृंगिभट्टस्तु, अयं व्यासः, काश्यां गंगासरितः तटे गंजालये, कृत्रिममद्यगृहे इत्यर्थः । अस्ति इति एवं जगाद उवाच ।। ७१ ।। मूलम् -

**ततो विनिर्गत्य समेत्य योगी वाराणसीं प्राप्य मरुन्नदीं ताम् ।**
**पुमांसमेकं परिलोक्य तत्र प्रत्यग्दृशा व्यासममुं विवेद ।। ७२ ।।**



Scanned with CamScanner

व्याख्या - तत इति । ततः श्रृंगिभट्टोक्त्यनन्तरं, योगी विद्यारण्यमुनिः, विनिर्गत्य प्रस्थाय, वाराणसीं काशीं, समेत्य लब्ध्वा, तां मरुन्नदीं देवनदीं गंगां, प्राप्य तत्र गंगातटे, एकं पुमांसं परिलोक्य दृष्ट्वा, प्रत्यग्दृशा ज्ञानदृष्ट्या, अमुं पुमांसं व्यासं सन्तं, विवेद ज्ञातवान् ।।७२ ।। मूलम् -

**नत्वाथ तं सत्यवतीतनूजं न्यवेदयत्स्वागमनार्थमस्मै ।**

**व्यासोऽपि तं ज्ञानिनमाकलय्य शुशुत्सुरेनं निजगाद चैवम्।। ७३।।**

व्याख्या - नत्वेति । अथ व्यासत्वेन ज्ञानानन्तरं, स विद्यारण्यमुनिः, तं सत्यवतीतनूजं व्यासं, नत्वा स्वस्यात्मनो यदागमनं तस्यार्थं प्रयोजनम् । नि० अर्थोभिधेयरैवस्तु प्रयोजननिवृत्तिषु इत्यमरः। अस्मै व्यासमहर्षये, न्यवेदयद् विज्ञापयामास । व्यासोऽपि तं विद्यारण्यं, ज्ञानिनम् आकलय्य ज्ञात्वा, शोधितुमिच्छुः शुशुत्सुस्सन् एनं विद्यारण्यम्, एवं वक्ष्यमाणप्रकारं, निजगाद च अवोचत् ।। ७३ ।। मूलम् -

**लिहन्त्वलर्कास्तव पुस्तकानि निधेहि तेषां पुरतोऽखिलानि ।**

**लीढानि तैस्तानि निमज्जयास्मिन् भाण्डे सुरायाः पुरतः स्थिते त्वम् ।। ७४ ।।**

व्याख्या - व्यासोक्तिमाह लिहन्त्विति । अलर्काः श्वानः, तव पुस्तकानि लिहन्तु आस्वादयन्तु । तेषां शुनां, पुरतोऽग्रे, अखिलानि पुस्तकानि पुरतः स्थिते अस्मिन् सुराया मद्यस्य, भाण्डे पात्रे, त्वं निमज्जयेति निजगादेति पूर्वेण सम्बन्धः ।। ७४ ।। मूलम् -

**तथैव कृत्वा यतिनां वरेण्यस्तूद्धृत्यभाण्डात्किल पुस्तकानि ।**

**व्यासं महर्षिं समुपेत्य पादपयोरुहद्वन्द्वमयं ननाम ।। ७५ ।।**

व्याख्या - तथेति । यतिनां वरेण्यः विद्यारण्यस्तु तथा व्यासोक्तप्रकारमेव कृत्वा भाण्डात्किल पुस्तकानि उद्धृत्य महर्षिं व्यासं समुपेत्य पादपयोरुहयोः पादाम्बुजयोर्द्वन्द्वं युग्मं ननाम ववन्दे ।। ७५ ।। मूलम् -

**भाष्याणि योगिन् परिशोधितानि चिरं जयन्तु क्षितिमण्डलेऽस्मिन् ।**

**लिङ्गं ततो लब्धमिदं गृहीष्वेत्याख्याय गन्तुं प्रददौ निदेशम् ।। ७६ ।।**

व्याख्या - भाष्याणीति । परिशोधितानि भाष्याणि अस्मिन् क्षिति मण्डले चिरं बहुकालं, जयन्तु सर्वोत्कर्षेण वर्तन्ताम् । ततो लब्धम् इदं लिङ्गं गृहीष्व स्वीकुरु, इति एवम्, आख्याय उक्त्वा, गन्तुं निदेशम् आज्ञां, स व्यासः, प्रददौ दत्तवान् । तदुक्तं विद्यारण्यविजये -



Scanned with CamScanner

दृष्ट्वा व्यासं महात्मानं शृंग्युक्तोपायमाश्रितः ।
तेन सम्पादितां शुद्धिमभिनन्द्य यतीश्वरः ।।
स्वकीयवेदभाष्याणामनुज्ञातोऽथ निर्गमे ।
पुनः पम्पामाससाद विद्यारण्ययतीश्वरः ।। इति ।

।।७६ ।। मूलम् -

**ऊढ्वा तदाज्ञां शिरसा यतीन्द्रः पम्पातटं प्राप्य स शृंगिभट्टम् ।**
**ऊचे तमभ्येत्य समस्तवृत्तं निर्वृत्तमावेदय वास्तवार्थम् ।। ७७ ।।**

व्याख्या - ऊढ्वेति । सः यतीन्द्रो विद्यारण्यमुनिः, तस्य व्यासस्याज्ञां शिरसा ऊढ्वा धृत्वा, पम्पातटं प्राप्य तं शृंगिभट्टं, समभ्येत्य एकदेति शेषः । ऊचे वक्ष्यमाणार्थमुवाच । निर्वृत्तमुर्वितं समस्तवृत्तं वास्तवोऽर्थो यस्य तथाभूतं सन्तम् आवेदय बोधय । इत्यूचे इति सम्बन्धः ।। ७७ ।। मूलम् -

**ये तान्यलिक्षंस्तव पुस्तकानि श्वानस्त एव श्रुतिपूरुषश्च ।**
**न्यमज्जयो यत्र च तानि योगिन् पीयूषभाण्डं तदिति न्यगादीत् ।। ७८।।**

व्याख्या - ये इति । हे योगिन् विद्यारण्यमुने, ये श्वानः तव पुस्तकानि अलिक्षन् लीढवन्तः, त एव चत्वारः, श्रुतिपूरुषः तानि पुस्तकानि, यत्र भाण्डे, न्यमज्जयो निमज्जयामासिथ, तत् पीयूषस्य भाण्डं पात्रम्, इति न्यगादीदुवाच शृङ्गिभट्ट इति शेषः ।। ७८ ।। मूलम् -

**योगी ततः शृङ्गिनिदेशमेत्य स्नानादिकर्माणि विधाय तत्र ।**
**नत्वा विरूपाक्षमुपेत्य रम्यं मठं स्वकीयं निषसाद तत्र ।। ७९ ।।**

व्याख्या- योगीति । ततोऽनन्तरं, योगी विद्यारण्यगुरुः, शृङ्गिणः शृङ्गिभट्टस्य, निदेशमाज्ञाम्, एत्य प्राप्य, तत्र तुङ्गभद्रायां, स्नानादिकर्माणि विधाय कृत्वा, विरूपाक्षं नत्वा रम्यं स्वकीयं मठम् उपेत्य तत्र मठे, निषसाद उपविवेश ।। ७९ ।। मूलम् -

**द्विबिन्दुवह्नीन्दुशके गतेऽस्मिन्रौद्र्यब्दभाद्रादिमभानुतिथ्याम् ।**
**स भारतीकृष्णगुरुस्समाधिमगच्छदित्यूचुरमुं जनास्तम् ।। ८० ।।**

व्याख्या - द्वीति । द्वौ प्रसिद्धौ, बिन्दुः प्रसिद्धः, वह्नयस्त्रयः, इन्दुरेकः, तैर्गते शके द्व्युत्तरत्रिशतीमितसहस्रसम्मितशालिवाहशके इत्यर्थः । गते सति रौद्र्यब्दभाद्रादिमभानुतिथ्यां रौद्रिवत्सरभाद्रपदशुक्लद्वादश्याम् । सः विद्यारण्यसंन्यासदातृत्वेन प्रसिद्धः, भारतीकृष्णगुरुः



Scanned with CamScanner

समाधिम् अगच्छत् इति एवं, तं विद्यारण्यं प्रति, जनाः ऊचुः।। ८० ।। मूलम् -

**श्रुत्वा तदुक्तिं समुपेत्य ऋष्यशृङ्गाद्रिमाराध्यगुरुं महान्तम् ।**
**संन्यासिनं तत्र च चन्द्रशेखराभिख्यमाधाय जगाद तत्त्वम् ।। ८१ ।।**

व्याख्या - श्रुत्वेति । स विद्यारण्यमुनिः, तेषां जनानाम्, उक्तिं वचनं, श्रुत्वा ऋष्यशृङ्गाद्रिम् ऋष्यशृङ्गगिरिं, समुपेत्य महान्तं पूज्यं, गुरुम् आराध्य आराधनं कृत्वा, तत्र शृङ्गगिरौ, चन्द्रशेखराभिख्यं चन्द्रशेखरभारतीनामानं, संन्यासिनं आधाय निवेश्य, तत्त्वं संन्यासिधर्मं, जगादोवाच ।। ८१ ।। मूलम् -

**श्रीचन्द्रमौलीश्वररत्नगर्भविनायकादीन्प्रवितीर्य तस्मै ।**
**विनिर्गतः शृङ्गगिरेस्सकाशाज्जगाम विद्यानगरं स्वकीयम् ।। ८२ ।।**

व्याख्या - श्रीति । स विद्यारण्यः, तस्मै चन्द्रशेखरभारत्यै, श्रीचन्द्रमौलीश्वररत्नगर्भ विनायकादीन् प्रवितीर्य दत्त्वा, शृङ्गगिरेस्सकाशात् विनिर्गतः सन् स्वकीयं विद्यानगरं जगाम प्राप ।। ८२ ।। मूलम् -

**श्रीबुक्कराजेन समर्पितं तं भारं भुवस्तापससार्वभौमः ।**
**स्वीकृत्य सिंहासनमत्युदारमारुह्य राज्याधिकृतिं वितेने ।। ८३ ।।**

व्याख्या - श्रीति । तापससार्वभौमो विद्यारण्यः, श्रीबुक्कराजेन समर्पितं तं पूर्वविन्यस्तत्वेन प्रसिद्धं, भुवः भारं स्वीकृत्य अत्युदारम् अत्युत्तमं, सिंहासनम् आरुह्य राज्याधिकृतिं वितेने चक्रे । तदुक्तं नृसिंहाश्रमिभिः -

विद्यारण्याय बिरुदानात्मीयान् ददतुश्च तौ ।
सम्पदञ्च तदुत्पन्नां तस्मै पाद्यमिवाब्धये ।।

इति ।। ८३ ।। मूलम् -

**बहूनि वर्षाणि यतीश्वरोऽयं सिंहासनस्थो धरणीमवंत्सन् ।**
**अकण्टकां संरचयाञ्चकार सर्वंसहां सर्वजनाभिनन्द्यः ।। ८४ ।।**

व्याख्या - बहूनीति । सर्वजनैरभिनन्द्यः श्लाघ्यः, अयं यतिशेखरो विद्यारण्यगुरुः, बहूनि वर्षाणि वत्सरान् । नि० स्याद् वृष्टौ लोकधात्वंशे वत्सरे वर्षमस्त्रियामित्यमरः । सिंहासनस्थः अवनीं धरणीम्, अवन्रक्षंत्सन् सर्वंसहां भुवम्, अकण्टकां निष्कण्टकां, निरुपद्रवामिति यावत् । संरचयाञ्चकार चक्रे। तदुक्तम् -



Scanned with CamScanner

सिंहासनमधिष्ठाय यतीन्द्रोऽयं वसुन्धराम् ।
पालयामास धर्मात्मा वर्षान् कतिपयान्मुदा ।।

इति ।। ८४ ।। मूलम् -

**श्रीबुक्कराजं शुभकृत्समायां राज्याधिकारे समयोजयत्सः ।**
**यश्च द्वितीयो हरिशङ्कराख्यो न्यवीविशन्मन्त्रिपदे तमार्यः ।। ८५ ।।**

व्याख्या - श्रीति । स विद्यारण्यमुनिः, शुभकृत्समायां शुभकृद्वत्सरे, समयां समयां वेति दीक्षितादिप्रयोगादेकवचनान्तोऽपि समासः । श्रीबुक्कराजं राज्याधिकारे समयोजयत् नियोजयामास, पट्टाभिषिक्तमकरोदित्यर्थः । हरिशङ्कराख्यो हरिहराख्यः, यः द्वितीयश्चास्ति तम् आर्यो विद्यारण्यः, मन्त्रिपदे सचिवस्थाने, यौवराज्ये इति यावत् । न्यवीविशत् स्थापयामास। तदुक्तं विद्यारण्यविजये नृसिंहाश्रमिभिः -

ततः शुभकृदब्दे तु विद्यारण्यो महामुनिः ।
श्रीमद्बुक्कणराजस्य पट्टबन्धमकारयत् ।।
मेषपालाज्ञया तं च मेषपालमरीरचत् ।
अशिषत्सोऽपि वसुधामनाकलितशात्रवम् ।।
यौवराज्ये हरिहरं न्ययोजयत सद्गुरुः ।
शिष्टानां पालने पूर्वं दुष्टानां निग्रहे परम् ।।
भागं स्वनामधेयस्य सार्थकं स विनिर्ममे ।। इति ।

नन्वत्र मूलकृता बुक्कराजं राज्याधिकारे समयोजयदिति यदुक्तं, तदसङ्गतम् । दत्तं राज्यं मेषपालाय राज्ञे इत्यभियुक्तोक्तिविरोधादितिचेत् भ्रान्तोऽसि । पूर्वं देव्यै बलिप्रदानाय चिन्तयतो बुक्कराजादीन् प्रति -

वितरेयं शरीरं वो ममैकं कुरुतेप्सितम् ।
त्रयोदश त्वया साकं येऽपि स्युर्भाविनो नृपाः ।।
ते मदीयाभिधानाङ्का यूयं विख्यातिमाप्नुथ ।

इति मेषपालप्रार्थितत्वेन पट्टाभिषिक्तस्य बुक्कराजस्यैव मेषपाल इति नामान्तरसत्त्वेन तत्पाल्यतया दत्तं राज्यं मेषपालाय राज्ञे इत्युक्तत्वात् ।

श्रीबुक्कणराजस्य पट्टबन्धमकारयत् ।।



Scanned with CamScanner

मेषपालाज्ञया तं च मेषपालमरीरचत् ।

इत्युक्तत्वाच्च ।। ८५ ।। मूलम् -

**तौ योगिवर्योदितधर्ममार्गमुपेत्य लोकान्किल रञ्जयन्तौ ।**

**वित्तं समस्तं मुनिपादयुग्मे समर्पयामासतुरादरेण ।। ८६ ।।**

व्याख्या - ताविति । तौ बुक्कहरिहरौ, योगिवर्येण विद्यारण्ययतीश्वरेणोदितं धर्ममार्गमुपेत्य लोकान्किल रञ्जयन्तौ सन्तौ समस्तं वित्तं मुनिपादयुग्मे आदरेण समर्पयामासतुः ।। ८६ ।।

मूलम् -

**बुधैस्समं सन्ततमादरेण स्वके मठेऽध्यात्मविचारसक्तः ।**

**शमादिषट्कस्य पदं महात्मा निनाय कालं यतिसार्वभौमः ।। ८७ ।।**

व्याख्या - बुधैरिति। शमादयश्च शमदमोपरतितितिक्षासमाधानश्रद्धाः। तत्र लौकिकव्यापारान्मनस उपरमः शमः । बाह्यकरणानामुपरमः दमः । ज्ञानार्थं विहितनित्यकर्मादिकर्मसंन्यास उपरतिः। शीतोष्णादिद्वन्द्वसहनं तितिक्षा । निद्रालस्यप्रमादत्यागेन मनःस्थितिः समाधानम् । सर्वत्रास्तिकता श्रद्धा । एतादृशलक्षणलक्षितानां शमादीनां षट्कस्य पदं स्थानभूतः, अत एव महात्मा महानुभावः, यतिसार्वभौमो विद्यारण्यमुनिः, बुधैस्समं स्वके मठे आदरेण अध्यात्मविचारसक्तस्सन् कालं निनाय यापयामास ।। ८७ ।। मूलम् -

**अद्वैतसिद्धान्तनिबन्धनादिप्रचारहेतोरनुशास्य शिष्यान् ।**

**प्रस्थापयामास दिशां जयाय विद्यावनेन्द्रो यतिशेखरोऽयम् ।। ८८ ।।**

व्याख्या ।। अद्वैतेति । यतिशेखरः अयं विद्यावनेन्द्रः विद्यारण्यमुनिः, प्रामाणिकत्वेन अभ्युपगतोऽर्थः सिद्धान्त इति शास्त्रज्ञमर्यादा । अद्वैतं सिद्धान्तः परमार्थो येषां तेषां निबन्धनादीनां प्रचारहेतोः शिष्याननुशास्य आज्ञाप्य, दिशां जयाय प्रस्थापयामास ।। ८८ ।। मूलम् -

**सप्ताष्टवेदाब्धियुते कलौ तु गते शके साष्टखवह्निचन्द्रे ।**

**क्षयाब्दचैत्रीयसितत्रयोदश्यभिख्यतिथ्यां स विशन् गुहायाम् ।। ८९ ।।**

व्याख्या - सप्तेति। स विद्यारण्यमुनिः सप्त प्रसिद्धाः, अष्ट प्रसिद्धाः, वेदाश्चत्वारः, अब्धयश्चत्वारः, तैर्मिते सप्ताशीत्युत्तरचतुश्शतीमितसहस्रसम्मिते इत्यर्थः । कलौ गते सति अष्ट प्रसिद्धाः, खं बिन्दुः, वह्नयस्त्रयः, चन्द्र एकः, तैस्सहिते शके च गते सति अष्टोत्तरत्रिशतीमित सहस्रसम्मिते च शालिवाहनशके गते सतीत्यर्थः । क्षयाब्दचैत्रीयसितत्रयोदश्यभिख्यतिथ्यां गुहायां



Scanned with CamScanner

विशन् इत्युत्तरश्लोकेन सम्बन्धः । तदुक्तम् विद्यारण्यविजये नृसिंहाश्रमिश्रीचरणैः -

विद्यारण्यमहात्मापि वैदिकस्थापने रतः ।
कलिधर्मानुसारेण स्मृतिं पाराशरं तथा ।।
व्याचक्रेथाविरोधेन स्मृतीनां भिन्नवर्त्मनाम् ।
संन्यासाश्रमरक्षायै गृहस्थाश्रमनामतः ।।
प्रसिद्धं वेदभाष्याणामन्यग्रन्थादिकस्य च ।
चकार यतिवर्योऽसौ स्वशिष्यानुग्रहे रतः ।।
अद्वैतविद्यारण्ये स्वयं नाम प्रकाशयन् ।
पृथिव्या दुर्मतस्थानां शिक्षां कृत्वा यथाविधि ।।
वैदिकं मार्गममलं स्थापयित्वा जगत्यसौ ।
शिष्यानद्वैतसिद्धान्तपारगान्विरचय्य च ।।
अष्टोर्ध्वत्रिशतीयुक्ते सहस्रे च गते शके ।
क्षयाब्दचैत्रीयसितत्रयोदश्यां दयानिधिः ।।
हेमकूटाचलदरीप्रवेशं व्यतनोद्गुरुः। इति।। ८९ ।। मूलम् -

**विधाय तस्मिन्नरसिंहभारत्यभिख्यमार्यो यतिसंयमीन्द्रः ।**
**आदिश्य धर्मान् किल हेमकूटदर्यामविक्षद्दिन एव तस्मिन् ।। ९० ।।**

व्याख्या - विधायेति। आर्यः पूज्यः, यतीन्द्रो विद्यारण्यमुनिः, तस्मिन् विद्यानगरे नरसिंहभारत्यभिख्यं यतिनं विधाय कृत्वा, धर्मान् यतिधर्मान्, किल आदिश्य उपदिश्य, तस्मिन्नेव दिने, यस्मिन् गुहाप्रवेशाय मतिं व्यधात् तस्मिन्नेव दिन इत्यर्थः । हेमकूटस्य हेमकूटनाम्नः, पर्वतस्य दर्यां गुहायाम्, अविक्षत् प्रविवेश ।। ९० ।। मूलम् -

**दिनेषु भूयस्सु गतेषु विद्यारण्यस्य चानागमनादलभ्यम् ।**
**निश्चिक्यिरे ते क्षयराधशुक्लतृतीयतिथ्यां गुरुरेनमार्याः ।। ९१ ।।**

व्याख्या - प्रमाणप्रबन्धेषु क्षयाब्दचैत्रसितत्रयोदश्यां विद्यारण्यगुरुकृतगुहाप्रवेशः प्रतिपादितः। शिष्टास्तु वैशाखशुक्लतृतीयायां विद्यारण्यगुर्वाराधनं वितन्वते । ततश्चानयोर्महान्विरोधः समायात इति तद्विरोधं परिहरन्नाह - दिनेष्विति । गुहाप्रवेशानन्तरमित्यध्याहारः । भूयस्सु बहुतिथेषु, दिनेषु गतेषु सत्सु, क्षयराधशुक्लतृतीयतिथ्यां क्षयवत्सरवैशाखशुक्लतृतीयायाम्,



Scanned with CamScanner

आर्याः साधवः, एनं गुरुं विद्यारण्यमुनिम्, अलभ्यं निश्चिक्यिरे निश्चितवन्तः । चिञ् चयने कर्तरि लिट् । विभाषा चेरिति अभ्यासात्परस्य चस्य कुत्वम् । यस्मिन् दिने अलभ्यत्वनिश्चयः तस्मिन्नेव दिने आराधनं कार्यमिति निरचिन्वन्निति भावः ।। ९१ ।। मूलम् -

**विद्यारण्यचरित्रं ये शृण्वतेऽधीयतेऽपि वा ।**

**भुक्त्वेह भोगांस्तेऽनन्तानन्ते यास्यन्ति सद्गतिम् ।। ९२ ।।**

व्याख्या - विद्यारण्येति । इह मर्त्यलेके, अन्ते देहावसाने, सद्गतिं मुक्तिम् । शिष्टं स्पष्टम् ।। ९२ ।। मूलम् -

**अवतारान्तरं श्रीमच्छङ्कराचार्ययोगिनः ।**

**विद्यारण्यस्स दयतां मयि शङ्करकिङ्करे ।। ९३ ।।**

व्याख्या - ग्रन्थान्ते मङ्गलमाचरति अवतारान्तरमिति । श्रीमतः शङ्कराचार्ययोगिनः, अन्यः अवतारः अवतारान्तरम्, सः विद्यारण्यः, शङ्करकिङ्करे मयि, दयताम् । यदर्थमवतीर्णः तद्विषयकज्ञानाय दयां करोत्वित्यर्थः । अवतारश्चाद्वितीयात्मा तत्त्वस्थापनायेति यथाप्रबन्धेन अवोचाम। ततश्चाद्वितीयात्मा ज्ञानोदयायानुग्रहं कुर्यादिति फलितम् । आत्मातिरिक्तस्य सर्वस्यापि मिथ्यात्वेन हेयत्वाद् अद्वितीयात्मविषयकज्ञानमेवाशास्यमिति रहस्यम् । ननु प्रत्यक्षसिद्धद्वैतप्रतिपादक - द्वासुपर्णा (सयुजा) सखायेत्यादि - श्रुतिप्रामाण्यात् द्वैतमतमेव परमार्थ इति चेत् न - स एष नेति नेत्यात्मा, नेह नानास्ति किञ्चन, तत्त्वमसि, त्वं तदसि, मायामात्रमिदं द्वैतमद्वैतं परमार्थतः इत्यादिश्रुतीनाम्,

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ।। (भगवद्गीता)
आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ।।

इत्यादिस्मृतीनां च कण्ठतस्त्वभेदं जल्पन्तीनां व्याकोपप्रसङ्गात् । न चैवं द्वैतश्रुतीनामानर्थक्यमिति वाच्यम्, व्यावहारिकदशायां तासां चरितार्थत्वात् । अपक्वकषायविषयकसगुणोपासनायामन्तःकरणशुद्धिसम्पादिकायां भेदस्यापरमार्थस्याङ्गीकर्तव्यत्वात् । न च प्रबलतरद्वैतश्रुत्यानुगुण्याय अद्वैतश्रुतीनामुपचरितार्थकल्पना, अद्वैतश्रुतीनामपूर्वार्थकत्वेन प्रत्यक्षप्रमाणप्रतिपन्नार्थबोधक द्वैतश्रुत्यपेक्षया प्राबल्यस्योक्तत्वात् । अपूर्वार्थकल्पनाया वैयर्थ्यमूलकत्वस्य शास्त्रज्ञसमयसिद्धतया द्वैतश्रुतीनामुक्तरीत्या वैयर्थ्याभावात् । न चैवं प्रत्यक्षसिद्धत्वेन द्वैतस्यापलपितुमशक्यतया



Scanned with CamScanner

परमार्थदशायामपि द्वैतस्यैव प्राबल्यमिति वाच्यम्, अविदितार्थवेदकत्वरूपश्रुतिधर्माभावेन द्वैतश्रुतीनामनुवादकत्वे पर्यवसानात् । अत एवानुभवसिद्धार्थानुवादकत्वेन अग्निर्हिमस्य भेषजम् इत्यादीनां नापूर्वत्वमित्यभिहितमाकरे । तस्मात् प्रत्यक्षादिभिरनवगम्यमानत्वेनाज्ञातं दुःखासंवलितमद्वैतमेव तत्त्वं श्रुतयः प्रतिपादयन्ति । अज्ञातवस्तुतत्त्वनिरूपणस्य श्रुतिधर्मत्वादिति गृहाण । एवं वेदलोकसिद्धार्थानुवादकद्वैतश्रुतीनां कथं प्रमाण्यं घटतामित्यनुसन्धेयमायुष्मतैव भवति । द्वैतश्रुतयस्त्वपक्वकषायविषया इत्यवोचाम । तस्मान्निरवकाशाभिरद्वैतश्रुतिभिः द्वैतश्रुतीनां परमार्थदशायां बाध एव न्याय्य इति फलितम् । ततश्चौपाधिकत्वेनातात्त्विकस्सर्वोऽपि द्वैतप्रपञ्चः सत्यं परमद्वितीयमखण्डैकरसं ब्रह्म इति सिद्धम् ।। शिवम् ।।

संख्यावत्कुलसार्वभौमरघुनाथाभिख्यसंख्यावता
कौण्डिन्यान्वयवारिराशिरजनीनाथेन या निर्मिता ।
तद्विस्तारितभावदीपकलिता माणिक्यमञ्जर्यसौ
जीयादारविचन्द्रतारमलघु श्रीशङ्करानुग्रहात् ।।

इति
श्रीमद्रघुनाथसूरिविरचितायां माणिक्यमञ्जरीव्याख्यायां
भावदीपिकाख्यायां विद्यारण्यविजयः
चतुर्थसर्गः
सम्पूर्णः ।।

**।। समाप्तश्चायं ग्रन्थः ।।**







Scanned with CamScanner

